आ०।ततो वृताया रोहिणीमृगशिर श्रविष्ठा उत्तरा इत्यतानि नक्षत्राणि उपगमने[1] प्रशस्तानि ॥

यद्वा पुण्योक्तम् । ११ ॥ १४ ॥ (७।२)।

दे०। पुण्य । ज्योति शास्त्र यथासभवमनुमन्तव्यमित्यथ ॥

आ०।यद्वा पुण्योक्त ज्योति शास्त्रविहित हस्तस्वात्यानि । तद्वोप यमने विवाहे भवति ॥

---

अथ ब्रह्मदेयाया प्रदानविधि वक्ष्याम । १ ।

दे । ब्राह्मण विधिना या दीयते सा ब्रह्मदेया[4] । तस्या प्रकृष्ट दाने विधिमितिकतव्यता वक्ष्याम । अथाधिकाराथ । ब्राह्मो दैव आष प्राजापत्य आसुर गान्धव राक्षस पशाच इ यष्टौ विवाहा । तत्र ब्राह्मासुरव्यतिरिक्ताना षण्णा विधान सुप्रथित नेह वचनमहति । तेन ब्राह्मासुरयोरेवेति कतव्यतोक्ता । तथा हि प्रसह्यापहाराद्राक्षसो विवाहस्तत्र किं प्रकाराभिधानेन । न किंचिदित्यथ । एवमसविज्ञातोप गमात्पैशाचोऽपि प्रकारवचन नाहति पापत्वात् । स्वयमिच्छ न्त्या सहेच्छावत सयोगाद्गान्धवस्तत्राप्यसाधारणीकेति कतव्यता । सह धमश्चयता सहापत्यमुत्पाद्यतामिति धम चाथ च कामे च नाभिचरयितव्यमिति प्राजापत्यविधि प्रथित । अलकृत्य कन्यामन्तवद्यृत्विजे प्रदीयत इति दैव । गोमिथुन कन्यावते दत्वाद्दत्यार्षस्य विधान ॥

आ०।अथशब्दो मङ्गलाथ । ब्राह्मण विवाहेन दीयते या सा ब्रह्मदेया।

---

1 R उपयमन p th V r f S t 11 2 Th b th tl M f B (1 h mm) Ad tl B 1 B mbay P d St k ब्राह्म D T C ( c l d) ब्रह्म A nd C (f t l a d) 3 ब्राह्मणन C T A 4 Th s A D ब्राह्म T C Tl D ( d h d) तिरेकाणा C h d तिरिकाणा T and f t h nd f D तिरेकिणा A a l first h d of C f ब्रह्म all Thu C D a d f rst ha d f T ज्ञावहृत A d sec hand of T 8 F tl wh l p s p C t ll IV 6 13

ब्रह्मशब्दो विवाहोपलक्षणार्थ । दैवस्याप्ययमेव विधि । त प्रदानमितिकर्तव्यता वक्ष्याम ॥

शुक्लपक्षस्य[1] पुण्याहे पर्वणि वोदगग्रान्दर्भानास्तीर्य तेषूपविशतः प्राङ्मुख प्रतिग्रहीता सामात्य प्रत्यङ्मुख प्रदाता २ ।

दे० । शुक्लपक्षस्य सबन्धिनि प्रशस्ते ज्योति शास्त्रविशुद्ध दिवसे पर्वणि वा पौर्णमास्यरूपे विस्तररूपपवित्रार्थमुत्तरदिगग्रान्दर्भानास्तीर्य । ततो दातृप्रतिग्रहीतारावुपविशत । प्राङ्मुखो भूत्वा क । प्रतिग्रहीता । कीदृश । सामात्य । सपरिजन । प्रदाता पुन प्रत्यङ्मुख उपविशेत् । तथैव । सामात्यो दर्भानास्तीर्योदगग्रान् ॥

ब्र० । अत्र दातृप्रतिग्रहीत्रो सुहृद्बन्धुभृत्य सहोदगग्रेषु दर्भेषूपविश्यो ॥

आ० । शुक्लपक्षस्यापूर्यमाणपक्षस्य । पुण्याहे पुण्येऽहनि । शुद्धतिथिनक्षत्रग्रहकरणयोगयुक्ते[3] विष्टिव्यतिपातगण्डान्तदुर्योगग्रहोपतपविवर्जिते ज्योति शास्त्रप्रसिद्ध । अथवा पर्वणि । दर्शपूर्णमासयो । कन्या दद्यात्प्रतिगृह्णीयाच्च । कथं । उदगग्रान्दर्भानास्तीर्य तेषु दर्भेषूपविशति । यत प्राची दिक् ततो मुखमस्यति प्राङ्मुख । को ऽसौ । प्रतिग्रहीता । कन्याया पितृव्यमातुलादिभिरमात्यै सह वर्तते य स सामात्य । तेषु दर्भेषु प्रदातोपविशति । सामात्य इत्युभयत्रापि सबध्यते ॥

मध्ये प्रागग्रोदगग्रान्दर्भानास्तीर्य तेषूदक सनिधाय

9 Tl s ll th M b d tl f ur f D vapal whi h r ad शुक्लपक्षस्य 10 Thu e nend d D तारौ प्रविशत पहीत्रो प्रविशेत् T A C 11 युक्त the M 1 Thu th tw Mss f Br th Berlin Stein and two Tueb gen reakas all the M s of Dev pal nd th Pa r k प्रागुदगग्रान्दर्भा

**व्रीहियवानोप्य[1] दक्षिणत उदङ्ङासीन ऋत्विगुपयमन कारयेत् । ३ ।**

द० । तयोर्दातृप्रतिग्रहात्रोर्दक्षिणदेशो उत्तराभिमुख उपविष्ट सन्नृत्विग्विशेष आचायस्तयोरुपयमन दातृप्रतिग्रहीतृसबन्ध[2] कारयेत् । किं कृत्वा । दातृप्रतिग्रहीत्रोर्मध्ये प्रागग्रानुदगग्राश्च दर्भानास्तीय तेषु च दर्भेषु कसपात्र्यामुदक[3] सनिधाय । तत्रोदकमध्ये व्रीहियवस्यावपन कृत्वा । अथोदक सनिधायति सामान्यवचनात् । कसस्य कुतो लाभ । कसे हिरण्य समाप्येति दर्शनात्[6] ॥

ब्र । ऋत्विड मध्ये यथाचार शालिचूर्णमण्डल[7] कृत्वा स्वस्त्ययन च कृत्वा[8] तत्र प्रागग्रा दर्भा प्रथममास्तृणाति तेषूपर्युदगग्रा स्तत्रोदकपूण कस[9] परिवर्तुल मङ्गल्यपात्र व्रीहियवगभ निदधाति । तत्र यथाचार विवाहोद्वाहदेवता अभ्यर्च्य दक्षिणत उदङ्मुख उपयमन वक्ष्यमाणविधिना करोति ॥

आ१० । मध्ये दातृप्रतिग्रहीत्रो प्रागग्रानुदगग्रान्दर्भानास्तीर्य । प्रथम प्रागग्रा । तेषु दर्भेषूदकपूर्ण कस निधाय । कसे हिरण्य समोप्यति दशनात् । उदक वा सनिधायति । तत्रादके व्रीहियवा प्रक्षिप्य तता दक्षिणत उदङ्मुख उपविष्ट । कोऽसौ । ऋत्विक । उपयमन कुर्यात् ॥

**समेतेष्वाह ददानीति प्रतिगृह्णामीति त्रिरावेदयते ।४।**

दे० । समेतेषु सघट्टितेषु दातृप्रतिग्रहीतृबन्धुषु स ऋत्विग्ब्रयात् । दातुस्तावद्दिद ब्रयात् । कन्यास्मै प्रदीयतामिति । प्रतिग्रहीतु कन्यास्मा प्रतिगृह्यतामिति । तता ददानि ते इति त्रिरुच्चारयति

1 व्रीही यवा वाप्य th I ah M f B t d f ओप्य th M f D p l d th B b y k उप्य th B I St l l l k s वाप्य I X ( Th 4 गहसब ध th th M 3 कास्य D 4 कास्यस्य D कासे D 6 Se XVI
ऌ स्वस्तिका tl B b y M f B 8 पठित्वा tl I h e M कास्य tl I l M

दातार बोधयेत् । दाता तथैव कुर्यात् । एव प्रतिगृह्णामि ते इत्यप्यृत्विजावेदित प्रतिग्रहीता ब्रूयात्। त्रिषत्या[1] हि देवा इति श्रुति [2] । त्रिरभिहित न व्यभिचारि स्यात्सकृदुक्त व्यभिचारो भवतीति त्रिरुच्चरणमिष्ट । अत एव समेतेष्वाहे-युक्त बहुजनसनिधौ दत्ता[3] प्रतिगृहीता[3] च न कश्चित्क दाचिदपहर्तु यक्त वा शक्यतीति ॥

ब्र० । कन्या ददा वस्मै भवानिति दातार प्रचोदयेत् । कन्या प्रति गृह्णा वस्मद्भवानिति[4] वर एव त्रिवार । उदकपूव दत्ताया कन्याया प्रणवोच्चारणपूर्वं भगवन् कन्या प्रतिगृह्णामीति त्रिवार। नात्र सावित्र प्रतिग्रहमन्त्र । प्रत्याम्नानात् ॥

आ० । समेतेषु सगतेषु ज्ञातिष्वाह । किं । कन्या दत्ता वस्मै भवानिति प्रदातार चोदयेत् । कन्या प्रतिगृह्णा वस्मद्भवानिति वर । ततो ददानि ते प्रतिगृह्णामाति त्रीन्वारानावेदयते। उच्चैर्भाषयते दातृप्रतिग्रहीतारौ। कन्या ददानि त इति दातार जल्पयते। कन्या प्रतिगृह्णामीति वर। एव त्रिरावेदनमुच्चै सुव्यक्त यथा भवति निष धनमेतदुपयमनमृत्विक कारयद्द्वयनापि ॥

**एतद्ध सत्यमित्युक्त्वा समाना व स वो मनासीत्यृत्विगुभौ समीक्षमाणो जपति । ५ ॥ १५ ॥ (२।३)**

दे० । एतद्दानप्रतिग्रहकम युष्माक स यमव्यभिचारितमस्त्विति लौकिकोक्तौ। ऋत्विक समाना व इत्यान्हिकमृग्द्वय जपति। उभौ दातृप्रतिग्रहीतारौ वीक्षमाण ॥

ब्र० । प्रतिगृहीताया कन्यायामृत्विगतद्ध सत्यमिति मातृवरौ पश्यन्नाह। एतन्न सत्यमिति प्रतिवदत । एव त्रिर्व्यत्यास ततो वरस्योत्तरत उपविष्टाया वध्वा समाना व स व इत्यृत्विग्वधूवरावीक्षमाणा जपति। जपादूर्ध्वं वरस्योत्तरत उपवेशये न्नित्यन्ये ॥

1 त्रिस्त्या t] M S k t] VIII 1 1 ) 3 त त D 4 स्माद्भ० t] M माणौ t] M f D p l (but th ) l t] t l P cak वीक्ष्यमाण t] M

आ० । एतद्ध सत्यमित्युक्त्वा ऋत्विक । ते ऽपि एतन्न सत्यमिति प्रतिवचन यथालिङ्ग वदन्ति । तत समाना व स वो मनासी यृग्द्वयमृ विगुभौ पक्षौ वधूवरयो समीक्षमाणा[1] जपति । पुनऋत्विग्ग्रहणादेतन्न सत्यमिति प्रतिवचन ज्ञायते । अत्र सावित्र प्रत्याम्नात । कन्या तूषे करे वा गृहीत्वा कन्या प्र तगृह्णामीत्येष एव प्रतिग्रह ॥

---

## अथ शुल्कदेयाया । १ ।

दे० । आसुरविवाहविधिमाह । अथ शुल्कदेयाया । प्रदानविधि रुच्यत इति शेष । शुल्केन मूलेन या दीयते सा शुल्कदेया ॥

ब्र० । शुल्कदेयाविधिरासुरविवाह विषय । कुमारीणा यदा केशा वेणीब धनयाग्या स्युस्तदा सीम तोन्नयनविधिना सङ्गोद्धर णमम त्रक[3] प्राग्वाक्प्रदाना कतव्यमि द्राणीमासु नारीष्विति यद्वक्ष्यति तद्वाचा त्ताया कन्यायामिन्द्राणीयाग आज्येन वाग्दानदिवसे भवेत्[4] । तत्राज्य हवि । आज्य हविरनादेश इति हि परिभाषा । यज्ञ यजेतेति[6] वचनात् । इति त त्र लक्ष्यते । तस्मादाज्यभागा ते चतुगृहीतेन प्रधानम् ।

अम त्रका[7] तु कार्येय स्त्रीणामावृदशेषत ।
सस्कारार्थं शरीरस्य यथाकाल यथाक्रमम ॥

आ० । मिथुन शुल्क । तथा । आसुरे ज्ञातिभ्यो द्रविण दत्त्वा । स च वैश्यस्य द्रविणव त्वात् । तेन शुल्केन या दीयते सा शुल्क देया । तस्या प्रदानविधि वक्ष्याम इति शेष ।

## हिरण्य व्यतिहरत । २ ।

---

1 समाम्यमाणा th M अमुर tl M 3 Tl tl I h M f B th B nb y M रण समन्त्रा 4 II tl [ h M f P the P l y M t यग्च्यति l tl o l कन्याया भवत् । In tl 3 l K d k f the I a k jnas tr pa ibha a 6 Th I ml y M यजेग्गिति Tl B mbay Ms आम । 8 M usm II 66 9 Thı m ans p b bly गोमिथुन ।

दे० । सुवर्णं विजिगीषया परस्पर ददतो दातृप्रतिग्रहीतारौ । आसु र वादस्य विजिगीषो [1] । प्रधानत्वाच्चासुराणा राजसत्वेन अन्योन्योपचार कुरुत इति गम्यते । कन्यामूलभूत तु सुवण व्यतिहरतो निश्चिन्वतो द्वौ दातृप्रतिग्रहीतारौ । सभूयेत्यथ द्वय[2] त त्रणावृत्त्यावगम्यते ॥

आ० । हिरण्य या।तहरतो दातृप्रतिग्रहीतारौ परस्पर समपयत ॥

**प्रजाभ्यस्त्वेति प्रददाति । ३ ।**

दे० । त प्रकृत हिरण्य प्रजाभ्यस्त्वेत्यनेन ददाति वर कन्याया पित्रे ॥

आ० । प्रददाति वर ॥

**रायस्पोषाय त्वेति प्रतिगृह्णाति । ४ ।**

द० । कन्याया पिता प्रतिगृह्णाति ॥

**कसे हिरण्य समुप्य हिरण्यवर्णा इति चतसृभि समवमृशन्त । ५ ॥ १६ ॥ (२ । ४)**

दे० । सर्वे ब वव उपस्पृशन्ति । बहुवचन सर्वब ध्वपेक्षण । तत्क न्यामूलभूत हिरण्य प्रतिगृहीत कसपात्र निधाय जलयुक्त हिरण्यवर्णा इ यग्भिस्तिसृभि समवमृश त घोरपापवि शुद्धय ॥

आ० । कसे हिरण्य समाप्य प्रक्षिप्य प्रकृत हिरण्यवर्णा इति चत सृभि समवमृशन्त । बहुवचना सर्वे ज्ञातयोऽपि । हिरण्यम यदेव न मूल्य । मूल्यमन्यन्पि भवति ॥

1 1l A D आसुर वाषस्य विजिगीषु । सभूयतत्यथ० A
२ 1h B lltl M f D p l th B l 1 t T
b k ly th P k 3( ( d | Al) d
समोप्य | Ad XV 3 4 Tl f t d d h l
| d ( th d ) t TS \ 6 1 b d
lh f l | b bl | t f th K tl k Th
D A ऋग्भि । Tl l t l t f
समेत्य tl M

ानिकैर्मन्त्रै[1] कन्यामलङ्कृत्य चतुष्पादे भद्रपीठे
ासीनायाश्चतस्रोऽविधवा माता [2]पिता च गुरु
मस्ता सहस्रच्छिद्रेण पवित्रेण स्नापयित्वाहतन
ासा प्रच्छाद्य स्थालीपाकस्य जुहोतीन्द्राय स्वाहेन्द्रा
स्वाहा कामाय स्वाहा भगाय स्वाहा ह्रियै स्वाहा
यै स्वाहा लक्ष्म्यै स्वाहा पुष्ट्यै स्वाहा विश्वावसवे
धर्वराजाय स्वाहेति। १।

। अथ विवाहम ह। पादचतुष्टययुक्तो भद्रपीठः। शोभने आसने प्राङ्मुख्या उपविष्टायाश्चतसृषु दिक्षु चतस्रोऽविधवा भवन्ति। वामभाग माता। दक्षिणभाग पिता। अग्र गुर संस्कारस्य कर्ता सप्तम। तेषु यथासनिवशन स्थितेषु। ान्ाने भवा गौदानिका। तम त्रस्ता गुरुः कन्या सहस्र च्छिद्रयुक्तन पवित्रण पावनन वस्त्रविशेषण सुप्रजा वाय गौानिकरव म त्रै कनकेयूरादिभियथाविभवमलकृत्या हतेनानुपभुक्तेन वाससा प्रच्छाद्य स्थालीपाकन गुरुजुहाति। अत्र पल्लवचतुष्य वस्त्रस्य पवित्रस्य चतस्रोऽविधवा अवष्ट भन न्त। मातापितरौ जलमभिषिञ्चत। गुरुम त्रपाठ कराति स्नापनेऽलकरण च गुरुरव प्रयोजककर्ता[3] नन होमेन समानकर्तृकत्व। वि ावसव ग धवराजाय स्वाहा इ यके वाहुति। तन नव भवन्ति॥

व । ब्रह्मदेयविधिना प्रत्ताया कन्याया सौभाग्यविवृद्धय विवाह सनिकृष्ण्वहस्सु गौदानिकम त्रस्नापनपूर्वमि द्राद्या नव देवता स्थालीपाकेन यष्ट्व्या। शुद्धपक्षस्य पुण्याह इद सर्वं।

1 Thu r गान्ा th M pr m e 2 Th p sage b अत्र पल्व ) t d tak from D pal ty th author th K rmak d n th Ste a d P M 3 Ilu or प्रयाजन th Ms

आज्यभागान्त हुत्वा हारकयूराद्याभरणालकृता दक्षिणतो ऽग्नश्चतुष्पादे भद्रपीठ प्राङमुखीमुपवेश्य तस्या मूर्ध्नि सहस्र च्छिद्र शुक्लोर्णोत पवित्र सव्यन पाणिना सप्त यथोक्त स्नापका स्वय चालकृता प्रातैरवग्रम्य सवग धकुकुमकर्पू रजातीफलपूगफलमङ्गल्यफलादिदूर्वाक्षतनानाविधकुसुममङ्ग ल्यवृक्षपल्लवादिमिश्रितवारिपूर्णकलशैर्दक्षिणपाणिस्थैर्या आपो दिव्या इति[1] द्वाभ्यामेना व्याघ्रमिति च[1] स्नापयन्ति। ततो ऽवरूढा गुरोर्दक्षिणतो मङ्गल्यमश्वोपविष्टामहतेन वाससा प्रच्छाद्येन्द्राय स्वाहेत्येव नव यथोक्ता प्रधानाहुती स्थाली पाकस्य मेक्षणेनावदाय जुहोति। विश्वावसवे गन्धर्वराजाय स्वाहेति नवमी॥

आ०। इदानीं भर्तृसयोग सति मन्त्रव सस्काराधिकारात्पिता करोति। गौदानिकैर्मन्त्रै कन्या स्नापयित्वेति सबन्ध। कन्यामलकृत्य कटककयूरकुण्डलादिभि। चतुष्पादे भद्रपीठ त्रिपात्स्नानपीठ भवति। अत्र चतुष्पाद्ग्रहण। प्राङासीनाया चत्वारो ऽविधवा स्नापयन्ति। गौदानिकैर्मन्त्रैर्या आपो दिव्या इत्यादिभि। तथा सवसुरभिणानुलिप्यमानामना[2] व्याघ्र परिषस्वजानमित्यतदभिप्राय गोदानिकैर्मन्त्र स्नापयित्वेति। चतस्रो ऽविधवा सहस्रच्छिद्र वस्त्र पयन्तेषु गृहीत्वा शिरसि धारयन्ति। माता पिता गुरुश्च वासस उपरि या आपो दिव्या इत्यपो ऽभिषिञ्चन्ति। तत स्थालीपाकस्य जुहोति इन्द्राय स्वाहेति। ये तु गौदानिकमन्त्रजगकर्ममन्त्रै कन्याया क्षुरेणालकृति व्याचक्षते तेषा केशवपन प्रत्याख्यात।

1 Th ( d k m t f t XLIV 3 Acco d in t D ɪ l ly tw t K th XXXVII 9 8) 14 1 th tat m t n t b f l th t t h th plur l B tl tw v r d (p b bly th l t ga ıda k ) K th l 10 1 S l Ad tl tra

Cnj t al e d th M h लयमानसुना

अस्तु चेच्चूडाकरणमेव किं नानिर्दिष्ट समाचारविरोधश्चा मङ्गल । एतस्माद्यदेवास्माभिर्व्याख्यातं तदेव साधीयः ॥

नाडी[1] तूणव मृदङ्ग पणव सर्वाणि च वादित्राणि गन्धोदकेन समुपलिप्य कन्या प्रवादयते शुन वद दुन्दुभे सुप्रजास्त्वाय गोमुख प्रक्रीडयन्तु कन्या सुम नस्यमाना सहेन्द्राण्या कृतमङ्गला इति । २ ।

दे० । नाड्यादीनि सर्वाणि वादित्राणि गन्धोदकेन सुगन्धिना चतुः समाधिकेनोपलिप्य[3] पूर्वं कन्यैव प्रवादयते । वाद्यमानेषु च गुरुमन्त्र पठति । तत्र नाडी वशः । तूणव गोमुखः वाद्यविशेष ॥

ब्र० । प्रधानानन्तर नाडीतूणवाद गन्धोदकेनोपलिप्त शुन वद दुन्दुभ इत्यादिना कृतमङ्गला इत्यन्तेन मन्त्रेण कन्या प्रवादयते । तत ऋतुतिथियागादितन्त्र समाप्ते स्वस्त्ययन कृत्वा सर्पिष्मदन्न ब्राह्मणा भोजयत ॥

आ । ततो नाड्यादीनि वादित्राणि गन्धोदकेन चन्दनकुङ्कुमादिक ल्केन समुपलिप्य कन्या प्रथम वादयते । नाडी वश । तूण वस्तप्रकार मुखवायुपूरण । नालवक इति प्रसिद्ध ॥

प्रतिसखि प्रक्रीडयत्येकमहर्द्वे वाहोरात्रे[5] ।३।१७। (२। ५)

आ० । तत प्रतिसखि क्रीडयति । सखी सखी नतयति गापयन्ति[6] च । एकमह । द्वे वाहनी । अहोरात्र वा द्वे ॥

---

यज्ञियस्य वृक्षस्य प्रागायता शाखा सकृदाच्छिन्ना सूत्र तन्तुना प्रच्छाद्य सावित्रेण कन्यायै प्रयच्छति । १ ।

दे० । यज्ञमर्हतीति यज्ञिय । यज्ञर्त्विग्भ्या घखञाविति[7] । यज्ञार्हाणा वृक्षाणा वर्णानामन्यतमस्य सबन्धिनीं शाखा सकृदाच्छिन्ना सूत्रतन्तुना प्राच्या दिश्यायता प्रसृता सकृदेकेनैव प्रहारेण

1 नाडी ॥ tl M t I ] I समनुलिप्य tl
I I M f B Iv 3 P चतु समाधिक A tl
w l 4 ( I XIVII I Of tl M f D pal ly D
l tl t Th Pl y t g D palm k
l j l k XVIII l 6 गोपयति tl M R ad
I l I सर्खी सर्खी नतयति गापयति च 7 घञाविति D th M r
ult l jt p l V I l

छिन्नामेकसरेण सूत्रतन्तुना प्रच्छाद्य कन्यायै प्रयच्छति ।
देवस्य त्वेत्यादिना प्रयच्छामीति कन्यायै प्रददाति गुरुः ॥

ब्र० । एकमहर्द्वे वाहारात्रे सखीभिः सह गायननर्तनादनन्तरमश्वत्थादुम्बरादियज्ञियवृक्षोद्भवा पूर्वादिक्प्रसृता सकृदाच्छिन्ना लोहितसूत्रप्रच्छन्ना सावित्रेण कन्यायै शाखा प्रयच्छति ॥

आ० । देवस्य त्वेत्यनेन शाखा प्रयच्छामीत्यन्तेन ॥

**या ते ऽलक्ष्मीर्मातृमयी[1] पितृमयी सङ्क्रामणी सहजा वापि काचित् । ता तिष्येण सह देवतया निर्भजामि निर्णुदामि सा द्विष त गच्छतु तिष्यबृहस्पतिभ्या नमो नम इति[2] । २ ।**

दे० । गृहीतशाखा कन्या मन्त्रयते[3] गुरु[4] । या ते ऽलक्ष्मी० नमो नम अन्ये तु तिष्यबृहस्पतिभ्या नमो नम इति एकं यजुरेकदेशमाच्छिद्य शाखात्सर्गे प्रयुञ्जते वक्ष्यमाणे ॥

ब्र० । या ते ऽलक्ष्मीरिति शाखाहस्तामनुमन्त्रयते । तिष्यबृहस्पतिभ्या नमो नम इत्यन्तो मन्त्रः ॥

आ० । या ते ऽलक्ष्मीरिति गृहीतशाखा कन्यामनुमन्त्रयते नमस्कारान्तेन । अलक्ष्मीनिर्णोदनमेतच्छाखाप्रदानम् ॥

**तस्या उत्सर्ग स्थावरोदके शुचौ वा देवतायतने[5] । ३ ॥ १८ ॥ ( २ । ६ )**

दे० । स्थावरोदक कूपतडाकादि । तत्र तस्या शाखाया उत्सर्गः प्रतिपत्तिकर्म । शुचौ देवगृहे । देवगृह मद्योपहारशोणितादिनापवित्रमपि सभाव्यते । तदर्थं शुचिग्रहणम् ॥

ब्र० । शाखाया यथोक्तस्थाने स्थापन । होमस्यानाम्ना न त्रिकादिभिर्जुहुयात् ॥

---

1 अल T C A d the Ste n rc k 1l us B ( इति not gi en by Devapala) If th text l ta d no nor t not apparent whereto this ma tr bel n P h ps the mea ing of the si trakar was to connect t w th S tra 3 Cp D vapala o th s S tr Th Stein rcak add mmed telv इति शाखाया उत्सग । 3 R अनुमन्त्रयत 4 Tl claus not ven by A Could th s words wl l in D vapala precede the mantra c t in a Sutra Cp al Br d Ad Th I l ore Ms of B a d Tuebingen r aka शुचौ वा दशे दवतायतने वा ।

आ० । स्थावरोदके शुचौ वा देवतायतने । देवतायतनमशुच्यपि भवति मद्यरुधिरोपहारसबन्धात्[1] । अतो विशेषणं शुचाविति । अत्र होमशङ्का न कार्या ॥

---

अथातो हविष्यकल्पं व्याख्यास्यामः । १ ।

दे० । हविष्यकल्प इति पारिभाषिकी कर्मविशेषसंज्ञा ॥

ब्र० । द्वादशवर्षं यावद्यद्यनूढा कन्या तत ऊर्ध्वं रजस्वलेतिदोषनिवारणार्थं हविष्यकल्पः ॥

आ० । अथशब्दो ऽत्र नैमित्तिकप्रदर्शनार्थः । ब्रह्मचर्यान्तं निमित्तं । दशवार्षिकं ब्रह्मचर्यं कुमारीणां द्वादशवार्षिकं वा । अत ऊर्ध्वं पुरुषं प्रतीच्छया स्वप्ने वा रेतःसेकः संभाव्यते । अत ऊर्ध्वमतत्कर्मावश्यं कर्तव्यं । अतो हविष्यकल्पनाम व्याख्यास्यामः ॥

दशवार्षिकं ब्रह्मचर्यं कुमारीणां द्वादशवार्षिकं वा । २ ।

दे० । वर्षदशकादूर्ध्वं ब्रह्मचर्ये[3] कुमारी न स्थापयितव्या पित्रा । आगत्या[4] वा[4] द्वादश वर्षाणि नातिक्रमणीयानि ॥

ब्रह्मचर्यान्ते गन्धर्वे देवकुले वा द्वावग्नी प्रज्वाल्य द्वौ पशू उपाकरोत्यर्यम्णे[5] दक्षिणं प्राजापत्यमुत्तरम् । ३ ।

दे० ब्रह्मचर्यावसाने विवाहात्पूर्वं गन्धर्वे निर्निमित्तजलस्राविणि देशे देवतायतने वा लौकिकौ द्वावग्नी प्रज्वाल्य द्वौ पशू छागौ कन्यासंस्कारार्थमुपाकुर्यात् । पशुकल्पवत् । एकमर्यम्णे दक्षिणभागवर्तिन्यग्नौ द्वितीयं प्रजापतये उत्तरभागवर्तिन्यग्नौ । इतिकर्तव्यता समन्त्रव्याख्याना पशुकल्प एव व्याख्यास्यामः ॥

ब्र० । अत्र द्विपशुपक्षे द्वावग्नी ऋत्विजौ वरुणप्रघासवत् । एकपशुपक्षे एक एवाग्निरेक एवर्त्विक् । विशेषवचनाभावादजपशू एव द्वौ । ऋतस्य त्वेत्यत्रार्यम्णे जुष्टं प्रजापतये जुष्टमिति पश्वलाभे न प्रयोगः ।

आ० । एतद्वयसो ऽर्वाङ् न कर्तव्यं । ब्रह्मचर्यान्तसंभावनमात्रेणैव कर्तव्यं । गन्धर्वे गन्धर्वोदकसंनिधाने प्रतिमा देवकुलं वा । कथं कर्तव्यं । अग्नी द्वौ प्रज्वाल्य वरुणप्रघासवत् द्वौ पशू उपाकरोति । पशुकल्पवत् । अर्यम्णे दक्षिणं प्रजापतये उत्तरम् ॥

1 Emended सत्यक the M 2 Eme d d मकाय the M 3 Found o ly i A 4 Thus TC (C first hand आगत्य वा) अमत्या वा A आपनापि वा D 5 यम्णो D T C as gi e n th text A nd Br and the P rsian caka 6 See LI ऽवाङ् the M

असंभवे त्वेकपशु ।४।

दे० । प्रचुरार्थाद्यभावे एक एव द्विदैवतः पशुरुपाकर्तव्य । अवदानानि च हृदयादिभ्यो मेदोऽन्तेभ्यो द्वादशभ्या[1] द्विर्द्विर्ग्रही तव्यानि । अयमप्रजापतिभ्या स्वाहेति होम । एक एव च योग सह तयारेकदेशत्वधर्मसमवायात् । अत एव कश्चिद्धृद यादिभ्यो द्विगुणान्यवदानानि नेच्छन्ति ॥

ब्र० । यद्येक ऋतस्य त्वा देवहविः पाशेन प्रतिमुञ्चाम्यर्यमप्रजाप तिभ्या जुष्टमित्यज दक्षिण ऽधशिरसि बध्नाति । अयमप्रजाप तिभ्यामिति भीषाहोम । अर्यमप्रजापतिभ्या जुष्टमवकृन्तामीति वपाकर्तन । अर्यमप्रजापतिभ्या स्वाहेति नामधेयहोमः ॥

आ० । यदार्थानुसमयेन कचित्काण्डवानुसमयन सहार्थस्यानुग्रहाय असंभवे त्वेकपशु यागो द्विदैवत । अर्यमप्रजापतिभ्याम् ॥

तण्डुलैर्वा कुर्यात् । ५ ।

दे० । धनदौर्गत्ये सति हिंसानियमेन वा तण्डुलै कुर्यात् । तण्डुल ग्रहणं पिष्टकार्थम् ॥

ब्र० । पश्वलाभे तण्डुलपिष्टेन वा पश्वाकृतिं कुर्यात् ॥

आ० । तण्डुलशब्द प्रकृतिद्रव्यसमर्पक । तेन तण्डुलपिष्ट कर्तव्य । अन्यथा वृत्तिसंगृहपक्षयो नोपपद्यते अत्यन्तविकारत्वात् ॥

यथास्थान पशुर्यथास्थानमवदानानि तथा हवि ।६ ।

दे० । यत्रैव स्थाने आज्यभागाभ्यां पूर्व[2] मुख्यः पशुस्तत्रैव पिष्टक पशुः अवदानान्यपि तेषां च श्रपणहोमौ इतिकर्तव्यता एव नाञ्जनयूपनियोजनोपपायनविशसनादिलुप्तार्थवर्जं । हवि पशुपुरोडाशस्थाने स्थालीपाक । तदपि यथास्थान पशुपुरोडा शक्रमे । वपाहोमस्थान त्वाज्यहोमः ॥

ब्र० । तस्य वपामन्यानि चावदानानि हृदयादीनि यथास्थानं कल्पयेत् ॥

आ० । पिष्टपशोर्यथास्थानं पशु यथास्थानमवदानानीति वदति । तेनो पाकरणशाखानियोजनोदकुनयनावदानादि पिष्टपशोरपि कुर्यात् । अवदानानि वपादीनि । तेभ्य एवाङ्गेभ्यो ऽवदाय श्रपयित्वा जुहुयात् । स्विष्टकृत च ऽयङ्गात् । एकपशावर्यमप्रजापतिभ्यां स्वाहेति होमः । बहून्यक्षराण्यतिरिच्यन्ते यत्र । ऋकूनामा न्यक्षराणि । तत्र अक्षुह । एतद्यमाह[3] । पूयाते वा एतरयो

1 शभ्यो D T C 2 पूर्वो मुख्यो A पूर्व मुख्य the other Mss
3 The following must be a citation from a Brahmana

यद्वस्तु यदेनमूहाति तस्मादच नोहेत् । दर्शितश्च सूत्रकारेण तुल्याक्षर ऊह । उन्मेष तिष्ठोदुत्स तिष्ठति[1] विकार । तथा हवि । किमत्र विधीयते । यावत्पशुतन्त्र प्राक् स्विष्टकृतो यथार्चा तमन्त्र साधयित्वत्यप्येतत्किमर्थं[2] विधीयते । अत्रो च्यते । इहान्यत्पशुपुर डाशस्थानीय हविर्विधीयते ॥

**अग्निं सोम वरुण मित्रमिन्द्र बृहस्पति स्कन्द रुद्र वात्सी पुत्र भग भगनक्षत्राणि काली षष्ठीं भद्रकालीं पूषण त्व ष्टार महिषिका[3] च[3] गन्धाहुतिभिर्यजेत ।७॥ १९॥(२।७)**

दे० । सुगन्धचन्दनघनसारादिद्रव्ययुतेनाज्येनाहुतयो गन्धाहुतयः । ताभि ग्न्यादिक सप्तदश देवता यजेत । वात्सीपुत्र इति देवतानाम । यत शब्दैकसमधिगम्या देवता विभक्तिविपरि णामेन चतुर्थ्यन्त स्वाहाकारयुक्तैः शब्दैरुद्दिश्याग्न्यादिदेवता यष्टव्याः । अग्नये स्वाहत्यादिकैः ॥

ब्र० । वनस्प तयागादन तमग्नये स्वाहा वात्सीपुत्राय स्वाहा महिषिकाय[4] स्वाहेति सप्तदश स्रुवेण कर्पूरकुंकुमगन्धाहुती हुत्वा ऋतुतिथियागादि तुल्यम् । अतिक्रान्तद्वादशवर्षाणां कन्यानामिद प्रायश्चित्त नान्यासाम् ॥

आ० । ततोऽग्न्यादीन् गन्धद्रव्ययुक्ताभिश्चन्दनयुक्ताभिराहुतिभिर्यजेत । अग्न्यादीन्महिषिकान्तान्सप्तदशावापस्थाने यजेत । काल्यै स्वाहा षष्ठ्यै स्वाहेति होमः । उपहारो भवत्यव ॥

---

**अथातो हविष्यपुण्याह । १ ।**

दे० । इयमपि पारिभाषिकी सज्ञा । हविष्येण व्रीह्यादिना पुण्येऽहनि क्रियमाणताशब्दप्रवृत्तिनिमित्तम्[5] ॥

आ० । अथातः शब्दो नमित्तिकव्युदासाथः । हविष्यपुण्याह इति कर्मणो नामधेयम् ॥

**उदकान्त गत्वा यथोपपत्ति वा पयसि स्थालीपाक श्रपयित्वा सर्वगन्धै फलोत्तरै सशिरस्का[6] स्नापयि**

---

1 Cp Āp srs IX 18 1–2 2 साधयित्वेत्यप्यत the Ms The passag refers t ? 3 Uncertain some of the Mss (the Lahore M of Br from the M of Devapala A th Pa ı ıan the Stein and a Tuebıngen rcaka) महिषिका च not giv n by Br 4 महिषिकायै Lahore agaı 5 Thus the Mss ! 6 स्कं the Lahore Ms of Br Ād and the Mss of Devapa ın the text exc T

स्वाहृतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोतीन्द्राणी वरुणानी गन्धर्वाण्युदकान्यग्निर्जीवपुत्र प्रजापतिर्महाराज[1] स्कन्दो ऽर्यमा भग प्रजानक इति। २॥२०॥ (२।८)

दे०। उदकस्य समीप गत्वा । अतिदूर तडाकादिके[2] ग्रामे[3] यथोपपत्ति[4] यत्रोपपद्यते स्थाने[5] क्षीरेण[6] स्थालीपाक कृत्वा माङ्गलिकबिल्वाक्षोटादिफलोपेताभि सर्वौषध्यादिगन्धयोगिनीभिश्चाद्भिरामलकै कन्या स्नापयेत्। सशिरस्कामित्यनेनान्यदा[7] स्त्रीणामशिरस्कमपि स्नान भवतीति सूचयति स्नापनाहतवस्त्राच्छादनव्यवदानेन[8] च स्थालीपाकेन होम स्नानाद्य तत्पूर्व स्थालीपाक इति विवक्षित क्रम । चतुर्थ्या देवतापदपरिणाम स्वाहाकारश्च पूर्ववत्। जीवपुत्रो ऽग्निरित्येकैव देवता। जीव प्राणो वायु पुत्रो रक्षत्रो ऽस्यति बहुव्रीहिरन्यपदार्थप्रधानो योग्यश्च सनिहितो ऽग्निरेवान्यपदार्थः। महाराज इत्यत्र न पूजनादिति[9] प्रतिषधो ऽस्ति नियमाश्रयणात्। पूजायां स्वतीग्रहण[1] कर्तव्यमिति वचनादन्यथा हि परमराज[11] इत्यादावपि ऋच[12] प्रतिषेध स्यात्। अन्ये तु महाराजा[13] इत्याकारन्तं पठन्ति। ते स्वतीनियम[14] प्रतिनाद्रियन्ते॥

आ०। इन्द्राण्यै वरुणान्यै गन्धर्वाण्यै उदकान्यै महाराजाय स्कन्दाय प्रजानकाय जुष्ट निर्वपामीति सावित्रादिना समनुद्रुत्यैकादशभ्यो देवताभ्यो निर्वपति। आज्यभागान्ते हुते सर्वगन्धैः

1 राज T C a d Br as l the P r ı n c k Tl e com mentaries se m to po nt rath r to ०राजा but tl P cak l महाराजाय स्वाहा 2 Th ıs D T दूरतडाका A दूर तरतटाका C but तर effaced 3 Thus D and second hand f C त्वगाम A दिका तगामे T दिकान्त गामे first h nd of C 4 पत्ति D T C ०पात्त A 5 स्थान D 6 चीर A साशरस्कामि० A T C 8 R व्यवधानेन ? 9 Thus (and cp Pan V 4 69) D T A C fir t hand न प्रजानकादिति, corr cted ınto नृपपूजनादाति (o1 न नृप ?) 10 महखाय A C T 11 राज्ञ A D p rhaps राज as also T 12 ऋचाबाध A 13 Thus A only राज C D T 14 स्वता A

फलोत्तरै सशिरस्का स्नापिता कन्या नवेन शुक्लेन सदशेना न्यधूतेन वाससाच्छाद्येन्द्राण्यै स्वाहा वरुणान्यै स्वाहेत्येवं पय सस्यावदायैकादश प्रधानाहुतय । अग्नये जीवपुत्रायेत्यकाहुति ।

आ । तम् (हविष्यपुण्याहं) उदकसमीपे गत्वा कुर्यात् । यथोपपत्ति[1] वा[1] । यत्र वा कर्तुमुपपद्यते । पयसि स्थालीपाक श्रपयित्वा नाप्सु । आज्यभागान्त सर्वगन्ध सर्वौषधिभिः फलोत्तमैराम लकादिकैः । तथा च । सर्वौषधीभिः सयुक्ताः शुष्क आमल कत्वचः । स्नान माङ्गलिकं कुर्यादलक्ष्मीनोदन हितम् । सशिरस्कमिति वचनादशिरस्कमपि स्नान स्त्रीबालकानामिति ज्ञायते । अहतेन अव्युषितेन विभवानुसारेण वाससा प्रच्छाद्य स्थालीपाकस्य जुहोति । अग्नये जीवपुत्राय स्वाहेत्येकाहुतिः । जीवपुत्र इति बहुव्रीहिरन्यपदार्थमपेक्षते । महाराजेति समासा न्ता[2] न कृतः । तन महाराज्ञे स्वाहेति प्रयोग ॥

---

यामेव द्वितीया रात्रिं[3] कन्या विवाहयिष्यन्स्यात्तस्या रात्र्यामतीतें निशाकाले नवा स्थालीमाहृत्य पयसि स्थालीपाक श्रपयित्वा[4] सर्वगन्धै फलोत्तरै सशिरस्का स्नापयित्वाहतेन वाससा प्रच्छाद्य स्थालीपाकस्य[4] जुहो त्यग्नये सोमाय मित्राय वरुणाये द्रायोदकाय भगाया यम्णे पूष्णे त्वष्ट्रे राज्ञे प्रजापतय इति । १ ।

दे० । एका विवाहाहोरात्ररात्रि । तस्था पूर्वा या द्वितीया रात्रि यस्या पिता कन्या विवाहयिष्यन्भवेत् विवाहयिष्यामीत्यनेन व्यवसायेन युक्त । अथवा या भविष्यन्तीं रात्रिमाधिकृत्य पिता कन्या विवाहयिष्य स्यात् तस्या या द्वितीया रात्रि स्तामाश्रित्येतिकर्तव्यता प्रवृत्ता[6] । तस्यामेव रात्र्यामतीते

1 पत्तिर्वा the Ms 2 Cp Panini V 4 68 3 रात्री R and the Berlin Paris and Tubingen rcakas 4 From श्रपयित्वा unto कस्य not found in D A also omits these words except the first श्रपयित्वा T and C add them on the margin (T adding सशिरस्क) Thus A पूर्वा द्वितीया D C T 6 Thus D T वृत्त सन् A व्वृत्त स C

मध्यप्रहरद्वये महानिशाख्ये पूर्ववत्स्थालीपाकेन याग कुर्यात् गुरुरग्न्यादिभ्यो देवताभ्यः ॥

ब्र० । अथ विवाहदिनस्य पूर्वेद्युररुणोदयवेलायां नवां स्थालीमाहृत्याग्न्यादिभ्यः प्रजापत्यन्ताभ्यो द्वादशभ्यो निरुप्य पयसि स्थालीपाकं श्रपयेत् । आज्यभागान्ते यथावत्स्नापयित्वाहतेन वाससा प्रच्छाद्य स्थालीपाकस्य जुहोत्यग्नये स्वाहेत्यादि प्रजापतये स्वाहेति यावद्द्वादशेति । स्वाहान्ते होमः । ततश्चतुर्थ्यादिप्राशनान्तं तुल्यम् ॥

आ० । यां रात्रिमवधिं कृत्वा द्वितीयां रात्रिं कन्यां विवाहयिष्यन्स्यात्तस्यामवधिभूतायामतीते निशाकाले महारात्र इत्यथ प्रहरावशेषमात्रे नवां स्थालीमाहृत्येति । नवग्रहणात्पुराणान्यन्यत्रापि भवन्ति । इह तु नियमः । पयसि स्थालीपाकमिति व्याख्यातम् । श्रपणार्थीये पयसीत्यर्थः । अग्नये सोमायेति द्वादशाहुतीर्जुहोति ॥

एता एव देवताः पुंसः कुम्भं वैश्रवणमीशानं च यजेत । २ ॥ २१ ॥ ( २।६ )

दे० । पुंसोऽपि तस्यां रात्र्यां संस्कारार्थमेतयैवेतिकर्तव्यतया एता एव देवता यजेत । कुम्भादयश्च तिस्र इति । एतावानेव च विशेषः । स्त्रियो द्वादशाहुतयः पुंसः पञ्चदश ॥

ब्र० । वरोऽपि तस्मिन्नेवाह्नि एतस्मिन्नेव काले नवायां स्थाल्यां पयसि स्थालीपाकं श्रपयित्वाज्यभागान्ते तथैव स्नापयित्वाहतेन वाससा प्रच्छाद्यैताभ्यो देवताभ्यो हुत्वा कुम्भाय वैश्रवणाय ईशानाय तिस्र आहुतीर्यजेत । निर्वपणकालेऽप्यत्र पञ्चदश देवताः ॥

आ० । एता एव देवताः पुंसोऽतिदिश्यन्ते। अस्यामेव रात्र्यामन्यदा वा ।

चतस्रो ऽष्टौ वाविधवा शाकपिण्डीभि स्त्रियो[1] ऽन्नेन[2] च ब्राह्मणान्भोजयित्वा वीणागायिभि सह सगायेयुरपि वा चतुरो नर्तन कुर्यात्। क्रीड व शर्धो मारुत मनर्वाण रथेशुभ कण्वा अभिप्रगायतेति ॥ १ ॥

दे०। अविधवा जावद्भर्तृका । शाकमिश्रा पिण्ड्य शाकपिण्ड्य । चतस्रो ऽष्टाविति च प्रथमान्त स्त्रीपदसमानाधिकरण। चतस्रो ऽष्टो वेति यथासभव विकल्प । समसख्यानियमार्थमेतच्चतुष्ट्वाष्ट्वनियमार्थामिति केचित् । तेनाय समन्वय । अन्यूनाश्चतसृभ्या ऽविधवा स्त्रिय समसख्याषट्कवर्जा शाकपिण्डीभिरन्यैश्च यथासमृद्धिभिर्भोजनविशेषेब्राह्मणान्भोजयित्वा। वाण्या वाद्यमानया सह ये गायन्ति तच्छालास्त सह सभूता[4] मङ्गलाचार गायेयु । अपि वा चतुरो नर्तन कुयात् । चतुरो नतनप्रवीणो नर्तन कुर्यात् । यद्यसा[6] शालादिगुणयुक्तो भवेत् । विपर्ययेण तु न ताभि सह नतन कुयादित्यनेनाभिप्रायेणापिवाशब्द । अनुष्ठान न्वार्यवर्ते यादृग्दश्यते तथा क्रम । कन्याया मातृप्रभृतयो ऽष्टौ चतस्रो वा अविधवा यथाविभव भोजयित्वा ब्राह्मणाश्चाविधवाभि सह वाणागायिभिश्च गायन्ति नृत्यन्ति च सोत्साह । तदनुसारेणायमर्थ । चतस्रो वा स्त्रिय कर्मभूतब्राह्मणाश्च शाकपिण्डीभिरन्येन च भोजनप्रकारेण भोजयित्वा वीणागायिभि सहाविधवाभिश्च सगायेयु । क अथात् कन्या

1 Thus all the Mss of Text and Comm the original reading must have been (cp S ankh g hs I 11 5) सुरया 2 Thus Br and of the Mss of Devap la AT न्यन DC and Ad. Devap la seems to have read अन्येन see his Bha y 3 The verse though given sakalapathena is found in the Kathaka (XXI 13 54 14) 4 Thus D सभूता भूत्वा ACT 5 मङ्गलगान A 6 यो ऽसौ A 7 के ऽथा A and first hand of D

मात्रादय । अपि वेति समुच्चये सकलो ऽसा स्त्रागणश्चतुर सो साहा भू वा नतन कुयात् । काड व प्रगायत । अनेन गायतो ऽनुम त्रयते ॥

ब्र० । पूर्वेद्युरेव विवाहाह्न इदमपि कम । पतिवत्य [1] स्त्रियो[1] नृत्तगातकुशला शाकपिण्डाभि शकरामरिचघृतक्षौद्रमध्वा दिसा ितािभर्भोजयेत् । अ येनान्नेन च । ता अवि त्र वास्ते च विप्रा वाणागायिभि सह सगायेयुरपि वा तेषा मध्यादक एव चतुरो गातनृत्तज्ञ पुरुष कश्चिन्नतन कुयात् । काड व इति गायत ऋ विगनुम त्रयते म त्रलिङ्गात् ॥

आ० । अविधवा पतिव्रता पतिव त्य इत्यथ । अ येन चोन्नान्निना ब्राह्मणाश्चा यन च शाकपिण्डाभिर्भोजयि वा । अक्षाटतिललवणन्ध्यादिसस्कृता शाकपिण्ड्य । उभय समुच्चयाथश्चश द । वीणागायिभि सहता सगायेयु । वाणया सह ये गाय ति त वाणागायिन । अपि वा चतुरो नतन कुयात् । चतुरो नृत्तकुशल । तद्द्वय नृत्त चानुम त्रयत क्रीड व इ यनया । एतदा यभागा त कृ वा कुयात् ॥

**अक्षतसक्तूनामग्नि पुष्टिपति प्रजापति च यजेत । अग्निना रयिमश्नवत्पोषमेव दिवे दिवे यशस वीर वत्तमम् ॥ प्रजापते न हि त्वदन्य इति च । २ ।**

दे० । अक्षतानामनवहतानां यवाना सक्तुभिरग्नि पुष्टिपतिं यजेता ग्निना रयिमि येतया ऋचा । तथा प्रजापति प्रजापत इत्यान्मि त्रेण । एतावप्याज्यभागा त यागा ॥

---

1 Tl us th Pa s n ak Laho पतिमतानारी Bombay पतिव्रतास्त्रिया ⁰ Laho e समा यनान्न Thus Br and the Pa is an caka वायमुत्तम the Mss of Devap la but in the Mantrabh ya वीयवन्त वीरव त A वायव त TDC 4 Bı gives this verse sakalap thena 5 Thus A (without अन्य) DCT प्रजापतिमिति च the Parisian caka read as accepted into the text omitting however च

ब्र० । ततोऽक्षतसक्तुना पाणिनावदायाग्निना रयिं प्रजापते न ह्यातिः प्रधानद्वय । ऋतुतिथ्याद्याश्राविता त तुल्यम् ॥

आ० । हविषो[1] यत्र यत्र षष्ठा स्थालीपाकस्य जुहोत्याज्यस्य जुहोतीति तत्राप्राणिन षष्ठी पञ्चम्यर्थे वा द्वितायार्थे वा सम्बन्धमात्रविवक्षया वा । अत्र चकारभगवतो[2] नारायणस्येतिवत् । न माषाणामश्नीयादित्यादिवच्च ॥

**सर्वत्रोद्वाहकर्मस्वनादिष्टदेवतेष्वग्निं पुष्टिपतिं प्रजापतिं च यजेत । ३ ॥ २२ ॥ (२ । १०)**

द० । यत्र नाम्ना मन्त्रवर्णैर्वा देवतानिर्देश विवाहप्रकारेणोक्ते तत्राग्निं पुष्टिपतिं प्रजापतिं च यजेत । प्रकृतत्वादक्षतसक्तुभिराज्यभागान्ते भविष्यत्सु प्रास्थानिकादिष्वेतद्बोद्धव्यम्[3] ॥

आ० । प्राग्विवाहोऽथ होमान्ते उद्वाहा[4] । ते च सर्वे इत आरभ्यानादिष्टदेवता । यथा इद प्रास्थानिक विवाहो न च सहयक्षषु त्रिष्वनादिष्टदेवतष्वग्निं पुष्टिपतिं प्रजापतिं च यजेत । आज्येनेति केचित् । देवताग्रहणाद्द्रव्य परिसंचष्टे इति वदन्त । अन्यथा सर्वत्रोद्वाहकर्मस्वनादिष्टदेवतेष्वित्यवक्ष्यत्* । नव । एवमुच्यमान शाकपिण्डाभोजन गायन नर्तन सर्वमतिदिष्ट स्यात् । अतो याग सक्तुभिरेव ॥

---

**अथ प्रास्थानिकम् । १ ।**

द । प्रस्थाननिमित्त प्रास्थानिक कर्मान्तर वक्ष्यत इत्यर्थ । प्रस्थान च वरस्य श्वशुरगृहप्राप्तये विवाह कर्तुम् ॥

ब्र० । इद प्रास्थानिक कर्म वरस्य विवाहार्थ श्वशुरगृहागमनसमये कर्तव्यम् ॥

---

1 हविष्या the Ms 2 Corrupt ? M aning ? 3 ष्वव बोधव्य D ष्वेवद्बाधव्य T C ष्वेतद्धोतव्य A 4 Reading 5 रभ्यनादि the Ms 6 Are these words corrupt ? * and the S trakara would have omitted the words अग्निं यजेत 7 Thus of the Mss of Devap la D only TAC प्रस्था प्रा the Lahore Ms of Br and Ād as also two Tuebingen cakas

आ०। अथशब्द कन्योद्वाहव्यावृत्त्यर्थं। पुंस एव वेदमिति[1] भाव प्रस्थाननिमित्त कर्म प्रास्थानिकम्॥

तस्मिन्यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा पश्चाद्भगिनी सिच गृह्णाति[2] शस्त्र गृहीत्वा। २।

दे०। तस्मिन्प्रास्थानिके कर्मणि। यथोक्तमुपसमाधायाग्ने पूर्वं कर्तव्य। उद्धतस्य[4] चावोक्षितस्य च परिसमूहनपर्युक्षण परिस्तरणपूर्वमाज्याहुतिपञ्चकेन सतनाहोमश्चैकादशभि सस्करणमुपसमाधानमुच्यते। तत्र जयप्रभृतिभिर्मन्त्रैर्होम कुर्यात्। जयाभिधानाभ्यातानहोम कुर्यात्। आकूत चाकूतिश्च बृहस्पतिपुरोहिता ऋताषाडित्यादिभिर्मन्त्रै जुहुयादित्यर्थ।एते हि मन्त्रास्त साध्या वा होमा जयाभ्यातानराष्ट्रभृदाज्यभागादिशब्दसाम्रतया प्रसिद्धा। आज्यभागान्ते चाग्निं पुष्टिपतिं प्रजापतिं च यजेत। सर्वत्रोद्वाहकर्मस्वनादिष्टदेवतेष्वित्यादिसूत्रवचनप्रामाण्यादिति केचित्। अन्ये त्वाहु। सूत्रकारप्रामाण्यादेव जयशब्दोऽत्राग्नि प्रजापतिदेवतयोर्होमयोर्हुतयो परिभाषतये। आज्यभागान्ते[6] चोपसमाधानमिति। कश्चित्त्वाह। विवाहकरणेऽन्तरान्तराचोदितत्वादाज्यभागान्तानि कर्माणि कृत्वा पुष्ट्यर्थमग्नये प्रजापतये चाज्ञतसक्तुभिर्होम कर्तव्य। सूत्रकारवचनसप्रत्ययार्थमिति। अन्यथा हि नाम्ना मन्त्रैर्वा सर्वत्र देवतावगमान्नानादिष्टदेवत[7] किंचिदुद्वाहकर्मसु कर्म विद्यत इति। सूत्रार्थसप्रत्ययाभाव स्यात्। एव जयहोमेषु कृतेष्वाज्यभागान्ते वरस्य पश्चात्स्थिता सता भगिनी मुख्योपचरिता वा यथासभव खड्गच्छुरिकादीनामन्यतम शस्त्रविशेष हस्ते गृहीत्वा तूष्णीं सिचमुपरि

1 Thus the Ms 2 गृह्णातीति D गृह्णामीति TAC and the Parisian rcaka 3 पूर्वक T 4 R. उद्धतस्य 4 See Appendix II 5 See XXII 3 6 न्त C 7 न्देवते TC

परिधानायस्य[1] वाससो भ्रातु सबन्धिनोऽञ्जल गृह्णाति।परि धानदशा हस्तेन स्पृशतीत्यथ । अञ्चलग्रहणमदृष्टसंस्काराय शस्त्रग्रहणमपि[3] । तथा च प्रायस्तदेव शस्त्रमुत्तरकालेऽपि रक्षार्थ शयनादिसन्निधौ निधायमानमार्यवर्ते लक्ष्यते[4] ॥

ब्र० । अत्राप्यक्षतसक्तव एव हवि । आज्यभागान्ते ब्रजतो महाराजस्य भगिना पश्चाद्धस्तान्तमादत्ते छुरिकादिक शस्त्रमादाय जन्यै सह पूषा मेति गृहान्निष्क्रम्य स्वसा सिचान्तहस्तेव सह जलसमीप गच्छति ॥

आ० । तस्मिन्प्रास्थानिके कर्मणि यथोक्तमुपसमाधाय । उद्धता वोक्षिते ऽग्निसादन परिसमूह्य पर्युक्ष्य परिस्तीर्याज्यसस्कारान्त जयप्रभृतिभिर्मन्त्रेराज्यभागान्तर्हुत्वा । प्रभृतिशब्दो ऽवमग्राहक [7] । तेनाघाराद्यपि भवति । एव च जयप्रभृतिभिर्हुत्वेतिवचनमाज्यभागान्त तन्त्रमुपलक्षयति[9] । सर्वत्र प्रभृतिशब्दस्यावमग्राहकत्व सर्वतन्त्रेषु प्रसिद्ध । द्वादशरात्र प्रभृतानि सत्त्राणि युक्त्वा[10] एकादशरात्रादीनि विदधाति ।

एवमाज्यभागान्त हुत्वा पश्चाद्भगिना वरस्य सिच वस्त्रैक देश गृह्णाति । कथ । पूव शस्त्र शासनसमर्थ शरादि भगियेव ॥

## पूषा मेति यान्ति यत्रोदकम् । ३ ।

1 परि om T  2 Thus D हण सहशासस्काराथ TC 3 च instead of अपि A  4 वलक्ष्यते TC  5 Thus also the Parisian reaka वरस्य a Tuebingen Ms  6 Differently the Lahore Ms of Br and a Tuebingen Ms (after आदत्ते) पूषा मेति छुरिकादिकमादाय वरो जन्यसहित स्वस्रा गृहीतासिचान्त एवोदकान्त व्रजेत्  7 Instead of ऽव the Ms has a blank of one akṣara 8. Had then the text of Ād an हुति after प्रभृतिभि ? 9 यन्ति the Ms  10 सन्त्राणी the Ms

दे० । पूषा मा प्रपथे पात्वित्यादिना मन्त्रेणोदकसमुखा व्रजन्तीत्यर्थ ॥

ब्र० । [1]

आ० । पूषा मेति गच्छन्ति जन्या वरश्च ॥

शं नो देवीरित्युपस्पृश्य प्राची दिगिति यान्ति यथादिशम् । ४ ॥ २३ ॥ (२।११)

दे० । उदकान्त प्राप्योदकोपस्पर्शन शिरसि प्रक्षेपमाचमन कृत्वा । प्राची दिगग्निर्देवतेत्यादिना मन्त्रेण यथादिश या दिग्येषा गन्तव्या तदभिध्यायिना मन्त्रेण यथालिङ्गमभिध्याय[2] वर प्रभृतयो गच्छन्ति । अत्र विवाहस्य कारयिता यो गुरु स एव पिता वा वरस्य मन्त्रपाठे कर्ता ॥

ब्र० । तत्र शं नो देवीरित्युपस्पृश्य प्राची दिगग्निर्देवतेति यान्ति यथादिशं । उन्कान्ता कल्याणं वदन्ता स्वसा प्रत्येति । ततो होमकर्ताग्निं पुष्टिपतिं प्रजापतिं च सक्तुभिरिष्ट्वा अतुतिथ्यान्ति संस्थापयेत् ॥

आ० । भगिनी यत्र स्थाने उदकं तत्र शं नो देवीरित्यप स्पृष्ट्वा हस्ताधसकमात्र प्राची दिगिति यान्ति गच्छन्ति यथादिशं दिगुपलक्षणेन मन्त्रेणेत्यर्थ । ततो ऽक्षतसक्तूनामग्निं पुष्टिपतिं प्रजापतिं च यजेत । ततस्तन्त्रसमाप्ति ॥

षडर्घ्यार्हा भवन्त्याचार्य ऋत्विग्राजा विवाह्य प्रिय स्नातक इति । १ ।

दे० । विवाह्या पूर्वमेव पाद्यार्घ्यमधुपर्कैर्विवाह्य श्वशुरेण पूजनाय तुल्य च पूजाविधान षण्णामपीति षण्णामुद्देश । अर्घ्यं पूजामर्हन्तीत्यर्घ्यार्हा षड् भवन्ति । आचार्य उपनेताध्यापयिता शिष्यस्य । ऋत्विग्याज्यस्य । तस्यापि प्राक् कर्मण

1 See under Sūtra 3 2. ध्याय the Mss 3 Conjectural reading हस्ताधमकपात्र the Ms

समननात् । राजा क्षत्रिय । स ऽभिषकभावेन सदा जनपदस्य पूज्य । विवाहनमहतीति विवाह्य । अर्हे कृत्य तृचश्चेति[2] कृ ये एय प्र यय । स क याया पितुरर्घ्याह । तथा यो यस्य प्रियो गुणो कषण स तस्य दानाद्यवसरेष्व घ्याह । स्नातकस्तु सद्य स्नातक आचार्यस्य ॥

ब्र । विवाह्यस्य श्वशुरगृहागतस्यार्घ्यदानप्रसङ्गेणा येषामपि वि रिसामा यान्घ्याहाणामिह पञ्चाना ग्रहणम् ॥

आ० । अन तर श्वशुरगृहप्राप्तस्य मधुपर्केणापण पूव क्रियते । ब्रह्मदेयाविधानस्य सवा ऽयमितिकत यताकलाप । प्रस्थानात [3] तेन शङ्का न कत या । कन्याप्रदानादन तर मधुपर्क इति । मधुपकान्न तर ब्रह्मदेयावि ग्रानस्योपपन्न वा पूजापूव क वाच्च दानस्य । केचिद्विवाहस्योपरिष्ा मधुपकविधि पठ्यत इति तत्रव मधुपक ददाति तदव क यादाने निवृत्ते ऽसा विवाह्य इति वद त । सवदेशसमाचारस्तु विवाहा पूव मधुपकदान । अतस्तन्व साधाय । अतो ऽत्रव यारयास्याम । आन्ना ताव मधुपकाणा विधिरुच्यते । षडघ्याहा भव ति । अघ्य पूजामहय ति ये ते ऽघ्याहा । षडिति नियम ॥

## अथैनमर्हयन्ति । २ ।

देव० । अथश दो वन्यमाणप्रकारस्वाकाराथा निपातानामनकाथ त्वात् । एनमाचायादानाम यतम वक्ष्यमाणप्रकारेणाहय न्ति पूजय ति समानय ति ॥

आ० । अथतेषाम यतममहय न्ति यन्ना तन्नानयेतिकन यतया ॥

## आदौ च कर्मण । ३ ।

दे० । विवाहोत्तरकालमर्हण विहितमिति यथाचादितमानुपूर्यमि ति नयेन विवाहान्पूर्ध्वमेव मधुपकान्दिानमिति केचिदाह ।

1 Thus D समानाना TAC 2 See P ini III 3 169 3 Sic Ms 4 निवृत्तसा the Ms 5 R वन्न्ति ? 6 Of the M s of Deva only A g ves च CTD omit the word 7 केचिन्न्आ न्ता TAC

अत एव च विवाहोत्तरकाल एवेदमपकृष्य याचक्षते ।
तन्निरासायेद कर्मण आदावेव पूजन कर्तव्यम् ॥

आ० । चशब्दात्प्रतिसंवत्सरं च तदुक्त विवाहयज्ञयोरर्वाक् कर्मण तथा यज्ञ प्रत्यृत्विजं पुनरिति[1] ॥

**अर्घ्यमुदकं[2] सौषधं दर्भा इति । ४ ।**

दे० । अर्घ्यलक्षणमाह । अर्घ्यं० इति । उदक व्रीहियवयोश्चान्यतर [3] । दर्भा । एतत्त्रयमर्घ्यम् ॥

आ० । अर्घ्यं तावदुच्यते । उदकं सौषधं । सतण्डुलाक्षतबदर्यादि । दर्भाश्च । एतद्द्रव्यत्रितयमर्घ्यशब्देनोच्यते ॥

**कंसे चमसे वा दध्यासिच्य मधु च वर्षीयसापिधाय विष्टराभ्यां परिगृह्य पाद्यप्रथमैं प्रतिपद्यन्ते । ५ ।**

दे० । मधुपर्कलक्षणपूर्विकां पूजयितुरनुपदेशां पूजाप्रतिपत्तिमाह । कंसे चमसे वा प्रतिपद्यन्ते । अत्र पूजयितार इत्यथाल्लभ्यते । कंसपात्रे चमसे वा दारुपात्रविशेषे दध्यासिच्यते । मधु च मधुपर्क उच्यते । तच्च मधुपर्कपात्रं बृहता पात्रेण पिधाय स्थगयित्वा विष्टराभ्यां गृहीत्वा वा । पाद्य प्रथमं येषां पाद्यार्घ्यमधुपर्काणां तैर्यथायोग्यमूर्ध्वमधो मध्ये च पूजां स्वयमेव प्रतिपद्यन्ते पूजयितारः । न तु तत्राप्युपदेशमपेक्षन्ते ॥

ब्र० । अर्घ्यार्थमागतं बुद्ध्वा प्रत्युत्थाय स्वागतमित्युक्त्वा स्वयमेव तस्य पादप्रक्षालनं विधाय तं हर्षयन्गृहं प्रवेशयेत् ॥

आ० । विष्टराभ्यां दर्भसटाभ्यां परिगृह्याधस्तादुपरिष्टाच्च पाद्यप्रथमैर्द्रव्यैरुपक्रमन्त ॥

**मयि दोहो ऽसि विराजो दोहं पाद्यायै विराजो दोहमशीयेत्याह्रियमाणमनुमन्त्रयते । ६ ।**

दे० । कन्यायाः दातरि विवाह्यस्य निकटीभूते सति ऋत्विक् पाद्यादिकं कन्यादातृसमीपमानाययति । तदानीयमानमनेन

---

1 See Yajn I 110 2 अर्घ्य वादक the Mss of Devapala 3 Thus D तरदर्भा A तरदरभा C T

मन्त्रेण विवाह्यो ऽनुमन्त्रयते । अमन्त्रज्ञश्चेद्विवाह्यस्तदा अविगेवैन पाठयति । एव सर्वैश्चैयम् ॥

ब्र० । ततो विष्टरादिपञ्चन्तमर्घोपाकरणमुपहरेत् । मयि दोह इति पाद्यादिक सर्वं तदाह्रियमाणमर्घ्यार्हो ऽनुमन्त्रयते ॥

**विष्टरो ऽसि मातरि सीदेति विष्टरमास्तीर्य तस्मिन्नुप विशति । ७ ।**

दे० । अनेनासनान्तरस्योपरि दर्भविष्टरमास्तीर्य विवाह्य उपविशति तूष्णीम् ॥

ब्र । भगवन्निदमास्यतामित्युक्तवार्हयित्रा विष्टरे प्रत्ते विष्टरो ऽसि मातरि सीदेति विष्टरमास्तीर्य तस्मिन्नुपविशति ॥

आ० । अनन्तर विष्टरा सादेति विष्टर न्त्त स्वय वा गृहीत्वा आसनपाठादावास्तार्य तस्मिन्नुपविशति ।

**विष्टर आसीनायैकैक त्रि प्राह । ८ ।**

द० । विष्टरे न्र्भाच्छान्तिासनविशेष आसानायोपविष्टाय विवाह्याय पाद्यान्नामेकक त्रि प्राह कन्याया दाता । पाद्य पाद्य पाद्य । अर्घ्यमर्घ्यमर्घ्य । मधुपर्को मधुपर्को मधुपर्क । आचमनायमाचमनायमाचमनायमिति । आसानायेति सप्तम्यर्थे चतुर्थी । विष्टर आसान विवाह्य इत्यर्थ ॥

आ० । पाद्याद्येकक द्रव्य त्रीन्वारान्प्राह ॥

**नैव भो इत्याह न मार्षेति । ९ ।**

दे० । अभ्यर्हणायाभिमख्यापादनाय यद्भो इति पूजासबोधन प्राप्त नामसबोधन च माष यक्षन्त्त इत्यादि तन्निषेधयति ॥

ब्र० । भगवन्निति पून्यसम्मान वा वचनमत्र अयान्नव भो इति न मार्षेति ॥

---

1 Thus the Lahore Ms the Bombay M यित्वा 2 प्रत्ये the Bombay प्रत्त the Lahore Ms पत्त the Parisian o ka 3 आसीन the Ms 4 भोरित्याह the Mss of Devapala but cp the Bh ya 5 Thus TD णीयस्य मुख्या AC 6 Utterly corrupt the Lah Ms has पूजमस्माननवचन मन्त्रमत्र

आ० । अत्र प्राप्ताना पूजावचनानामभिमुखीकरणाय प्रतिषेध ॥

श नो देवीरित्यपो ऽभिमन्त्र्य पाद्याभि प्रक्षालयते[1] दक्षिण पादमवनेनिज इदमहमास्मि कुले ब्रह्मवर्चस दधाम्युत्तर पादमवनेनिज इदमह मयि तेजो वीर्यमन्नाद्य प्रजा पशून्ब्रह्मवर्चस दधामीति[2] । १० ।

दे० । श नो देवीरभिष्ट्य इ यादिम त्रेरपो ऽभिम य विशेषेण पाद्याभि पा यो शोधनसपादनसमर्थाभि पा प्रक्षालयते । ऽभ्यर्हणीयस्य कन्याया दाता । पादयो प्रक्षालने यथालिङ्ग म त्रा

ब्र० । भगव पाद्य पाद्य पाद्यमिति पाद्ये निवेदिते पाद्यपात्र दक्षिणेन पाणिनादाय त स ये पाणौ निधाय श नो देवीरि यपो ऽभि म य । ताभियथालिङ्ग वर एव स्वय पादाववनेनिज्यात्॥

आ० । ताभि पादौ प्रक्षालयते स्वयमेव । दक्षिण पादमिति दक्षिणमुत्तर पादमित्युत्तरम् ॥

आपोहिष्ठीयाभिरर्घ्यं परिगृह्य सावित्रेण मधुपर्कं विष्टरो ऽस्यन्तरिक्षमधिविश्रयस्वेति विष्टरमवकृष्योरु त्वेत्यवसार्य तच्चक्षुरित्यवेक्ष्य[6] पृथिव्यास्त्वेति विष्टरे[7] निधाय मधु वाता ऋतायत इति तिसृभि प्रदेशिन्या

1 लयति B a l tl Pa k ) Of ll tl M o ly tl L l o e opy of B g इति 3 Th i B \ l the B l i l a l of tl e M t Deva l la TD ( o d ha l) a l C th t ha l tl tl M आपो हि ष्ठयाभि 4 पर्को tl M t D ap l Tl M ot D a l a l tl I i k t l e उरु त्वा वाताय ( इति वाक्ष्य DTC i d tl e St ical . The M s of D ep la n ert l re भूमौ विष्टर भूमौ निधाय tl e P r an reaka 8 Although all the M rea l वात ( l th is al o l a t tl e Chambers M of tl K thi iot वाता D apāla start h s Mantra Bhaṣya from tl e plural Cp XXXIV 5

प्रदक्षिणमालोडयति[1] ॥ ११ ॥

दे० । आपो हि ष्ठेत्यादिभिरर्घ्यं प्रतिगृह्णाति । देवस्य त्वेत्यादिना मधुपर्कं प्रतिगृह्णातीत्यध्याहारपूरितेन सवितृदेवताकेन मन्त्रेण मधुपर्कं प्रतिगृह्णाति । विष्टरो ऽसीतिमन्त्रेणोपरितनं विष्टरमवकर्षति[2] । अवकृष्य चाक्षिप्य उरु वेति मन्त्रेण पसारयति । तच्चक्षुरित्यादिना मधुपर्कं वीक्ष्य । पृथिव्यास्त्वेत्यादिमन्त्रेणाधस्तने विष्टरे मधुपर्कं निदधाति । मधु वात ऋतायत इति तिसृभिरङ्गुष्ठसमापवर्तिन्या प्रदेशिनाति सञ्ज्ञयाङ्गुल्या प्रदक्षिणं कृत्वा दधिमधुना मिश्रयति ॥

ब्र० । भगवन्नर्घ्यमर्घ्यमिति त्रिरुक्त पाद्यपात्रवदर्घ्यपात्रमादायापो हि ष्ठेति तिसृभिः शिरसि कुशपवित्रेणापः क्षिपेत् । भगवन्मधुपर्को मधुपर्को मधुपर्क इति त्रिराह दाता । देवस्य त्वेति मन्त्रेण मधुपर्कं प्रतिगृह्णामीत्यञ्जलिना प्रतिगृह्य सव्ये पाणौ निदधाति । विष्टरो ऽसीति वर्षिष्ठपात्रस्योपरिस्थितं विष्टरमुत्क्षिपति विष्टरमवकृष्य उरु त्वेत्यवसार्य । अपिधानं निवार्य । तच्चक्षुरित्यभ्यवेक्षते । पृथिव्यास्त्वेति मधुपर्कं विष्टरे ऽत्र स्थितं भूमौ निधाय । मधु वात ऋतायत इति तिसृभिः प्रत्यृचं प्रदेशिन्याङ्गुल्या प्रदक्षिणं सयाति ॥

आ० । ततो ऽर्घ्ये निवेदिते आपोहिष्ठायाभिरर्घ्यपात्रं गृह्णाति । सावित्रेण च मधुपर्कं गृह्णातीति वाक्यशेषः । विष्टरो ऽसीत्युपरितनं विष्टरमाकृष्यापास्य । उरु त्वेत्युद्धाम्य तच्चक्षुरित्यनयानुष्टुभावद्यावलोक्य पृथिव्यास्त्वा नाभौ सादयामीत्यधस्तने विष्टरे स्थापयित्वा । दधिमधुनी प्रदक्षिणं वृत्त मिश्रयति ॥

वसवस्त्वाग्निराजानो भक्षयन्तु पितरस्त्वा यमराजानो भक्षयन्तु रुद्रास्त्वा सोमराजानो भक्षयन्त्वादित्यास्त्वा वरुणराजानो भक्षयन्तु विश्वे त्वा देवा बृहस्पतिरा

1 इयते Br (Bodl M ) ? अप t l of अव DCT

**जानो भक्षयन्त्विति प्रदक्षिणं प्रतिदिशं प्रतिमन्त्रं पात्रस्यान्तेषु लेपान्निमार्ष्टि[1] ॥ १२ ॥**

दे० । प्राच्या आरभ्य प्रदक्षिणं कृत्वा भक्षयन्त्वन्तैर्मन्त्रैर्मधुपर्कपात्रप्रान्तेष्वङ्गुलिलेपान्निमार्ष्टि । प्रतिदिशं प्रतिमन्त्रमिति वचनात्पश्चिमेन मन्त्रेणार्थात्पूर्वोक्तादिक्कोणे निमार्जनमापततीति ॥

आ० । लेपान्निमार्ष्टि । विश्वे त्वा देवा इत्युत्तरार्ध एव ॥

आ० । वसवस्त्वेति पात्रान्त प्राच्या आरभ्य दक्षिणाङ्गुलेर्लेपान्निमार्ष्टि शोधयति । पश्चिमनोत्तरत एवान्तरतो ऽवरेकात् ॥

**यन्मधुनो मधव्यस्य परमस्यान्नाद्यस्य परममन्नाद्यं रूपं तेनाहं मधुनो मधव्यस्य परमस्यान्नाद्यस्य परमोऽन्नादो मधव्यो भूयासं । त्रय्यै विद्यायै यशो ऽसि श्रियै यशो ऽसि यशसे[3] ब्रह्मणो दीप्तिरसि सत्यश्रीर्यशः श्रीर्मयि श्रीः श्रीः[4] श्रयतामिति मधुपर्कस्य चतुष्प्राश्नात्यङ्गुष्ठद्वितीयाभिः कनिष्ठया प्रथममेवमनुपूर्वं सर्वाभिस्तदवशिष्टं सुहृदे प्रयच्छति ॥ १३ ॥**

दे० । यन्मधुन इति मन्त्रेण मधुपर्कस्य संबन्धिनो भागानङ्गुष्ठसहितया एकैकयाङ्गुल्या गृहीत्वा चतुरो वारानश्नाति । अङ्गुष्ठसहितया वा कनिष्ठया प्रथमं ततो ऽनामिकया मध्य

1 निर्मार्ष्टि A ⁾ The Pa a l a Bo l av r cak fi t यन्मधुन/ मधव्यस्यति च an l tl e f llow tl t xt a g v al o 3 यशसासि C a l fi t h l f D p obably the orig al ea l o यशसो यशो ऽास p M nt ap tl a II 10 1 l ut Devap la l a a l यशस the Bha va run ng अतो यशस स्वामभामि 4 श्री g ven tw ce by all the Ms of Devap la by tl e Bombay M of B the Berl n the Tueb ngen the Bombay a d the Par s a aka o e by tl e Lahore M of Br and the Ste caka 5 Tl e M s of Devapāla he e n t च ( वा mu t be cancelled

मया प्रदेशिन्या प्रत्येक। यच्छिष्यते तत्सुहृदे कनीयसे भ्रातृप्रभृतये प्रयच्छति॥

ब्र०। य मधुन इति कनिष्ठादिभिश्चतसृभिरङ्गुलाभिरङ्गुष्ठद्वितीयाभि क्रमेण चतुष्प्राश्यावशिष्ट सवर्णाय मित्राय ददाति॥

आ०। य मधुन इति चतुर्वारा प्राश्नाति। कथ। अङ्गुष्ठद्वितीया भिरङ्गुलिभि। अङ्गुष्ठो द्वितायो यासा ता अङ्गुष्ठद्वितीया। एवमानुपूर्व्येण सर्वाभिरित्यस्यातिरिच्यमानत्वा पञ्चम प्राशनमिच्छन्ति[1]। तच्चशब्दे विना न लभ्यते। अतोऽनुपपन्न। तदवशिष्ट सुहृदे प्रयच्छति। शिष्टमिति वक्तव्ये तदवशिष्ट ग्रहण स्वय वा प्राश्नायादित्यवमर्थम्। गृह्यान्तरेषु च दृश्यत एव प्राशनम्॥

आचामत्यमृतोपस्तरणमसीति ॥ १४ ॥

दे०। अनेन मन्त्रेणाचामति॥

ब्र०। भगवन्नाचमनायमाचमनायमाचमनायमित्येव त्रिरुक्तेऽमृतोपस्तरणमसात्यप आचामति॥

तस्मा असिपाणिर्गा प्राह ॥ १५ ॥

दे०। अ यिता दत्तमधुपक सन् खड्गपाणिर्भू वा तस्मा अर्हणा याय भक्षितमधुपर्काय गामाह। गा प्रकरिष्य इत्यनुज्ञा प्रार्थयते। अर्थार्थेनेत्यथ गोश्च करण निपातनम्॥

ब्र०। तत आचान्तायाहयिता खड्गपाणिर्भगवन् गा प्रकरिष्ये गा प्रकरिष्ये गा प्रकरिष्ये इत्येव गा सनिहिता कृत्वाह॥

आ०। गा प्राह। गा प्रकरिष्य इति निवेदयतात्यर्थ॥

ता शास्ति मम चामुष्य च पाप्मान जहि हतो मे पाप्मा पाप्मान मे हतो कुरुतेति॥ १६ ॥

दे०। ता गा शास्ति। ओं कुरुध्वेत्यनुज्ञामर्हणीयो ददाती यर्थ। मम च म हत। अर्हयितामु मन्त्रमाह। ओं कुरुत। हे विशसितार गौ क्रियतामित्यनुजानातीत्यर्थ॥

1 Somewhere कचित् seem to ha e fall n out

ब्र०। मम चामुष्य चेत्यादिनों कुरुतेत्यन्तेन मन्त्रेण वरानुज्ञातस्ता मसिना शास्ति। अमुष्येति षष्ठ्यन्तं दातुर्नामोदाहरणम्॥

आ०। तां गामनुशास्ति अर्हो ऽनुमन्यते चेत्। अनुशासनं प्रेषणं क्रियायोगं। अमुष्येत्यत्राहयितुं षष्ठ्यन्तं नाम। यथा। मम देवदत्तस्य च पाप्मानं जहाति॥

चतुरो नानागोत्रान्ब्राह्मणान्भोजयेत्॥ १७॥

दे०। नानागोत्रान्नानाप्रवरांश्चादौ चतुरो ब्राह्मणान् भोजयेत्। पश्चात् सबान्धवमर्हणीयम्॥

ब्र०। तया चतुरः पृथग्गोत्रान्विप्रानाशयेत्॥

आ०। तया गवा प्रकृतया पूर्वं चतुरो नानागोत्रान् ब्राह्मणान् भोजयेत्॥

एष आद्य उपायः॥ १८॥

दे०। ब्राह्मणाय उपायो गोकरणादिक उपदिष्टः। तेन नात्र विचिकित्सा कर्तव्येत्यर्थः॥

ब्र०। एष प्रथमः कल्पः कला तु निषिद्धः॥

आ०। प्रथमः कल्प इत्यर्थः॥

यद्युत्सृजेन्माता रुद्राणामिति जपेत्। माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः। प्र णु वोचं चिकितुषे जनाय मा गामनागामदितिं वधिष्ट। सूयवसाद्भगवती हि भूया अथो वयं भगवन्तः स्याम। अद्धि तृणमघ्न्ये विश्वदानीं पिब शुद्धमुदकमाचरन्ती।

---

1 So tl Al t l अनुशास्ति 2 च ppl l lv 3 Tl Ialo M f Al l tl B l P a l Teb o la e l एष आद्योपाय 5 Tl t o e e a tel e of tl Teb ge M 4 तेनात्र ACT (tl e b tt l o ) ( Tl ( Rg l ) B tl Be l n r ka an l of tl M ot D ap la TC विश्वधानी the Par s an विश्वधानीं tl e Ste & Bomb y reaka विश्वग्नानी AD a d th s al g pe ppo l by Dev p l Bh a यतस्त्व विश्वदानी सर्वस्य धात्री पयोद्वारेण

ओ३मुत्सृजत[1] । तृणान्यत्त्वित्युक्त्वा तामुत्सृष्टा पशु मङ्ग वा[2] ॥ १६ ॥

दे० । अहयिताह ओमित्यविचारितासिद्ध कृत्वा । इत्युक्त्वा तामुत्सृष्टा दृष्ट्वा पशु छाग पश्वङ्ग वा मासखण्ड प्रति निदधीत ॥

ब्र० । यद्युत्सृजेद्भगवन् गा प्रकरिष्य इति यथोक्तमुक्ते ऽध्यार्हो मा प्रकार्षीरित्युक्त्वा माता रुद्राणामित्यृग्द्वय जप्त्वोमुत्सृजत तृणान्यत्त्वित्याह । तस्यामुत्सृष्टाया महाज तदङ्ग वा क्रीत्वा यथाविभव प्रतिनिदध्यात् ॥

आ० । तत्र यद्युत्सृजेदहा गामेव प्रयोग ॥

नामासो मधुपर्क स्यादिति ह विज्ञायते ॥ २० ॥

दे० । नामासो मासविहानो मधुपर्क स्यादिति ह श्रुतितो विज्ञायत । हशब्द इतिहासे ॥

आ० । हशब्द आगमसूचनार्थ । स चायमागम श्रोत्रियायागताय महोक्ष वा महाज वा पचेदिति ॥

अपि वा घृतौदन एव स्यात् ॥ २१ ॥ २४ ॥ ( २ । १२ )

दे० । अपि वा घृतमिश्रितादन एव कर्तव्यो मासछेषेण तादृशा वा

ब्र० । अपि वा सर्पिष्मदन्न स्यात् ॥

आ० । गोसनिकृष्ट हि घृतम् ॥

इति लौगाक्षिसूत्रे गृह्यपञ्चिकाया द्वितीयो ऽध्याय ॥



1 आम् m ng TC a 1 11 1 D o the marge A उत्सजतोमिति तृणा० 2 Thu ll th Ms the verb (प्रतिनिदधाति) seems to have fallen out 3 SatapathaBrāh III 4 1 2 4 Thus ACT द्राषिण D 5 तादृशा CT 6 घृष्ट the Ms 7 The olophon run in Br here इति श्रीमद्यजुषि काठके लौगाक्षिसूत्रे गृह्य

**अनृक्षरा ऋजव सन्तु पन्था येभि सखायो यन्ति नो वरेयम् । समर्यमा स भगो नो निनीयात्स जास्पत्य सुयममस्तु देवा इत्युदाहार प्रहिणोति ॥ १ ॥**

दे० । अनृक्षरा इत्यादिमन्त्रेण गृहीतजलभाण्डमुदकस्याहर्तार प्रेषयति । कन्यास्नानाद्युपयोगिजलमानेतु पुरुष प्रहिणोतीत्यर्थ ।

ब्र० । मधुपर्कप्रदानादनन्तर सुमुहूर्ते पाणिग्रहणसस्कार । तत्र ऋग्विगनृक्षरा ऋजव इति कञ्चिन्मङ्गल्योदकानयनाय प्रेषयति । कश्मीरेषु श्वश्रूरविधवा चेदन्या वाप्यविधवैव तदाहरति ॥

आ० । अनृक्षरा इत्यनया त्रिष्टुभा उदाहारमुदकाहरणार्थ सकुम्भ पुरुष प्रेषयति ॥

**शमीशाखया सपलाशयापिधायाहरेत् ॥ २ ॥**

दे० । स प्रहित उदाहार उदकुम्भ शमीशाखया सपत्रयापिधाय स्थगयित्वा उदकमानयेत् ॥

---

1 Th B l ftl M of D la TC d fi t l lct D A वरीय D c o l l a l वरण्य a l th tl l o co ie t l p tl M t bl a वरण्य वरणाय गङ्गादिक जलाहरणस्थानम् । It l ff lt t t t tl e ta t tl o l l o of tl tra Tl l o tl t B B t tl tl M of D p la D(T l l t tl wo l अनृक्षरा t अनृक्षरा इत्युदकलशमानीय l l t tl B l St Bo l l P k hav m la l अनृक्षरा इयुन्कमानीय P l ap l t a e of lo l le l t o p t t t o d ffe t tra text 1 अनृक्षरा इत्युदकमानीय o bo To me t p obabl tl t ng ll tle Sutra t t l a l o ly the pratika of tl vers l el fo d w tl acc nts one of the Tieb ge M 3 Thu D ll tl otle M सपलाशया वापिधाया 4 Thu D सपलाशया वा A सपर्णया वा TC

अ० । मङ्गल्यतर्वश्वत्थादिशाखया सपर्णया कुसुममालया शमीशाखया सकिसलया वा सुवर्ण वा ताम्रभृङ्गारमया पूर्ण स्थगयित्वा हरत् ॥

आ० । स च पुरुष शमाशाखया सपर्णया कुम्भमपिधायाद्भि पूरयित्वा आनयेत् ॥

एतासामेवापामुदकार्थान्कुर्वीत ॥ ३ ॥

दे० । एतासामवाहारितानामपा सबन्धिनो भागानवदायावदायोदकसपाद्यानथान् क याम्नानसुवर्णक्षारणाग्निपर्युक्षणादान् कुर्यात् नान्येन जलेन ॥

आ । एतासामेवापामाहृताना वक्ष्यमाणानुदकार्थान् कुर्वीत कन्यास्नापनादान् ॥

श[1] न आपो धन्वन्या श न सन्त्वनूप्या । श न समुद्रिया आप शमु न सन्तु या इमा इत्यकेवलाभिरद्भि स्नाता या अकृन्तन्या अवयन्या अतन्वत याश्च देवीरन्तॉ[3] अभितो ऽदद न्त[4] । तास्त्वा देवीर्जरसा सव्ययन्त्वायुष्मतीद परिधत्स्व वास इत्यहत वास परिधाप्याशासानेत्यन्तरतो मौञ्जेन दार्भेण योक्त्रेण

1 Th S t p l d by B ( n l th P an ka) by th wo l श न इति स्नात्वा But Br n t im x s thi cl pt w tl va s d gr ons and comm nts ? Tl i tl o d ng of tl Ma t a a d g to CD and tl e l r k ll tl e otl r Ms शमु न स्न्तु कूप्या । या इमा इत्य A tl lo ng w th कूप्या oc tl K haka (II 1 88 9) t i p ob ble that not thi ve wa ntend d l t the abov g v n n tl a v ou l g t tl e clo e Otherw e w voul l expe t the prat ka 3 W th tl e anun s k the Lahore Ms of Br and the Bombay Stein Be l n and Tueb ng n r ak 4 Devap la n his Mantra-bh ya p esi ppose अततन्त 5 Thu th Berlin Stein Parisian and Tuebingen Icakas दर्भेण the other Mss We exp t मौञ्जेन दार्भेण वा योक्त्रेण

वा सनह्यति[1] । आशासाना सौमनस प्रजा सौभाग्य रयिम् । अग्नेरनुव्रता भूत्वा सनह्ये सुकृताय कम् ॥४॥

दे० । अकेवलाभि सर्वौषध्यादिगन्धद्रव्ययुक्ताभि फलविशेष सहिताभिश्चाद्भि कन्या स्नापयेत् । अहतमपूर्वपरिहित मत्यन्ताभिनव वस्त्र परिधापयेत् ततश्चाशासानेत्यादिना मन्त्रेणान्तरे मध्ये गुप्त कृत्वा यथा न दृश्यते तथा वा सनहन कन्याया कुर्यात् । मौञ्जेन दर्भनिर्मितेन वा योक्त्रेण ॥

ब्र० । तत स्नानमण्डप चतुष्पादे भद्रपाठे कन्या नीत्वा श न आपो या इमा[3] इति सर्वौषध्यामलकयुक्ताभिरद्भि स्नापयति । स्नाता या अकृन्तन्निति वसनहस्त परिधानार्थं प्रचोदयति । मन्त्रमूर्विगेवाह न कन्या परिहिता । आशासानेति कामि त्यन्तेन स्वयमेव कन्या मुञ्जमयेन दभमयेन वा दाम्ना वासो ऽन्तरता बध्नाति ॥

आ० । स्नाता स्वयमेवाभिषिक्त[4] । आशासानेत्यनयानुष्टुभा योक्त्रेण तद्वास सनह्यति स्वयमव कन्या । अन्तरत प्रच्छन्नेन । योक्त्र त्रिगुण दाम । तच्च मौञ्ज दर्भमय वा ॥

प्रेतो मुञ्चामि नामुत सुबद्धाममुतस्करम् । यथेयमिन्द्र

---

1 सनह्यते the Lahore Ms of Bı and th Parısıan rcaka 2 The Mantra ın sakalap tha not gıvei bı Devap la ımmedıately after the S tra but later ın the Mantrabhāṣya The Maı tras are gıven wıth accents ın the Tuebıngen rcaka except the one beg nnıng या अकृन्तन् 3 So then Br accepts (cp note o on thıs S tra) two d fferent mantras (?) 4 स्वमेवाभि the Ms 5 Thus runs the Mantra accordıng to Br (and as to the first words accordıng to Ad ) Devap la reads ın hıs text प्रेतो मुञ्चातु मामुत सुबद्धाममुतस्करत् । (Thus D करम् ACT) In the Mantrabhaṣya the Mss have dıfferent readıngs हे कन्ये इत स्थानात्प्रमुञ्चातु ( AD ञ्चातु ) प्रमुञ्चामि त्वां नयामि भवतीं । मुञ्चतु (Thus D मुञ्चन्तु ATC) इति तिङ् व्यत्यय पुरुषव्यत्ययश्च । तथा च शाखान्तरे प्रेतो मुञ्चामीति मन्त्र पठ्यते । A for मा करत् th Bh ṣya g v कश्चिन्मा कार्षीत्

पशुकल्पस्य प्रकार वक्ष्याम ॥[1]

आ० । उक्तमाग्नेयेन स्थालीपाकेन पशुना वा यजेत । तथा द्वौ पशू उपाकरोतात्यादि[2] । तत्र पशावितिकर्तव्यतोच्यते । अथ पशुकल्प उक्त । दर्शपूर्णमासविकाराणा पाकयज्ञाना तन्त्रमुक्त । इदानी पशुविकाराणा तन्त्रमुच्यते । पशो कल्प पशुकल्प । स उक्त । अथ पशुकल्प । यूपाहुतिमिति[3] । अत्र[3] विकार विवक्षु प्रकृति मापादयति । आद्रापोद्वापलक्षणा[4] । तान्वक्ष्याम विकारेषु यथा चोदितमिति वचनाद्यावदुक्तमेव भवति यच्च विधीयते तत्पशुकल्प वद्भवति ॥

पूर्वेण शाखां निहत्य ॥ २ ॥

दे० । पूर्वेण मूलसूत्राणामुक्त । स उक्त एवेह यथोक्त पूर्वेणाधिकार वाक्येन[6] तत्र तत्र यथा नवेनानर्चिता ह्यस्य पशुहवेन नवाग्नय इति अतोऽसौ मत्स्यपशुना यजेतेति तथेत्याद्युक्तमग्नये पशुना यजेत पुन पूर्वेण शाखा निहत्येति सूत्रभेदो यथान्यै कृत यथा पूर्वस्मिन्पक्षे तस्य पूर्वेणेति सशय स्यात् । पूर्वेणाग्निमिति च नाधीत न चोपयुज्यते । उक्त पूर्वेणेति सिद्धत्वात् । पशुग्रहणाच्छाग एव । शाखावचनात्तक्षणादयो[9] यूपधर्मा न भवन्ति तत्स्थाने प्रयुक्ताया शब्दान्यत्वात् ॥

---

1 The paddhati of Br may be better given as a whole at the end of this Kandika 2 Cp XLVI 9 and XIX 3 3 My conjecture यूपाहुमित्यत्र the Ms It is probable that the chapter on pasubandha in the Katha yajnasutra began thus अथ पशुकल्प । यूपाहुतिं हाष्यन् । 4 Read probably आद्रवोद्वाप- तक्षणा । 5 Thus AT मूलमन्त्राणा० CD 6 The interpretation of पूर्वेण seems to have caused difficulties to the interpretators Devapala probably rightly connects it with the preceeding sutra ( अथ पशुकल्प । उक्त पूर्वेण ) 7 This all is incomprehensible to me 8 See Ad on this sutra 9 Thus emended तर्पणादेयो or ०तर्पणान्येया the Mss

आ० । पूर्वेणाग्नि[1] शाखा निहत्य यूपस्थाने ॥

तस्मिंस्तूष्णीं सर्वं यन्न लुप्तार्थम्[2] ॥ ३ ॥

दे० । तस्मिन्पशौ तद्बुद्धिक्रियमाणे[3]ऽपि यदुच्यते तत्तूष्णीं सर्वं भवति । सर्वं यत्कर्तव्यं तत्तूष्णीममन्त्रकं कुर्यात् । यन्न लुप्तार्थं । लुप्तार्थं तत्तूष्णीमपि न भवति यथा शाखाया तक्षणम् ॥

आ० । सर्वं तूष्णीं । यदुपाकरणादि इह चोद्यते तदमन्त्रकं कुर्यादित्यर्थः ॥

देवताहोमवर्जम् ॥ ४ ॥

दे० । यद्देवतासंबन्धं[4] तत्समन्त्रकं । देवतानाम्नावकर्तव्य[5] होमश्चेत्यर्थः ॥

आ० । देवताशब्दं वर्जयित्वा होमाश्च वर्जयित्वा ॥

प्रागाज्यभागाभ्यां दर्भेण पशुमुपाकरोति प्रोक्षति पाययति पर्यग्निं करोति ॥ ५ ॥

दे० । परिसमूहनादि राष्ट्रभृदन्तं कृत्वा प्रागाज्यभागाभ्यां दर्भेण पशुमुपाकरोति तूष्णीं प्रोक्षति च तथा पाययति अपः[6] पर्यग्निं च करोति पशुं । दर्भग्रहणं शाखानिवृत्त्यर्थं । प्रागाज्यभागाभ्यामुपाकरणीयहोमो प्रजापतेर्जायमान इति[7] । ततो दर्भेण पशूपाकरणं शाखान्ते प्रत्यङ्मुखं पशुमुपस्थाप्य । रशनादानं तूष्णीं । ऋतस्य त्वेत्यादिनाग्नये जुष्टं बध्नामीति[8] पूरितेन दक्षिणेऽर्धशिरसि पशुं बध्नाति छागम् ॥

आ० । प्रागाज्यभागाभ्यां परिसमूहनादिराष्ट्रभृदन्तं कृत्वा दर्भेण पशुमु

---

1 Did Ād find the word अग्नि in his text or is it added by him? cp Devapāla 2 The last three words only in Devapāla I doubt if they belonged to the original sūtra probably they are another redaction of the sūtra XIII 9 But as Devapāla comments upon them I have taken them into the text 3 तद्बुद्धिक्रिय० AT 4 ०बद्धं DC 5 ? Thus read AT D ०नाम्नानकर्त० DC 6 पय DC AT omit the word cp Ād 7 Kath XXX 8 169 17 21 8 Kath III 5 25 7

पाकरोति तूष्णीं । प्रोक्षति उरसि सर्वतश्च । पाययति अप । पर्यग्निं करोति ॥

घृतमवघ्राप्यापाव्या जुहोति ॥ ६ ॥

द । पशु घृतमवघ्राप्य । अपा यसमाख्याता आहुतार्जुहोति तेनव घृतेन प्रजानन्त इति पञ्चभि [1] ॥

आ । घृतमवघ्राप्य । अपाव्या जुहोति प्रजानन्त इति पञ्चभि । उपाकरणीयौ होमौ न भवत अचोदितत्वात्[2]

उल्मुक हरति ॥ ७ ॥

द । येन पर्यग्निकरण कृत तदेवोल्मुक हरति श्रपणार्थम्[3] ॥

आ । पशुश्रपणाथम् ॥

दर्भमास्तृणाति ॥ ८ ॥

द । दर्भस्तरण तूष्णी करोति ॥

आ । प्रत्यगग्रम् ॥

तस्मिन्यथोक्त सञ्ज्ञापयन्ति ॥ ९ ॥

द । तस्मिन्दर्भे सञ्ज्ञापयन्ति । मारयन्ति । बहुवचनेन नासिकादि ग्रहणादिना प्रत्यकशिरसमुदक्पादमित्यादि ज्ञायते ॥

आ । तस्मिन्दर्भे । यथोक्त प्रत्यक्शिरसमुदक्पाद । बहुवचनमनियमार्थ । अन्येऽपि सञ्ज्ञापयन्ति ॥

सञ्ज्ञप्त यथोक्तमद्भि प्राणायतनानि स्नापयति ॥ १० ॥

द । प्रमापिते सति प्राणस्य शरीरस्य वायोर्यान्यायतनानि मुखादीनि तानि स्नापयति । यथोक्तग्रहणात्पत्न्या स्नापन ज्ञायते ॥

आ । सञ्ज्ञप्ते प्रमापिते । यथोक्तमद्भि प्राणायतनानि स्नापयति । यथोक्त ग्रहणान्मन्त्रवत् । पत्नी चोदकहस्ता च पत्न्यादित्यमुपतिष्ठते । नमस्त आतानेत्यादि समदृभ्य इति भूम्या शेषमित्यन्त प्राणायत नाना स्नापनम् ॥

---

1 Kath XXX 8 130 1 10 2 Here Ad differs from Devapala and Br 3 Emended हरति पानाथ ACD मानार्थं T 4 K th III 8 25 15 26 1

उत्खिद्य वपां शाखां[1] विशाखां[1] च प्रच्छाद्य चरमेऽङ्गारे वपा निगृह्यान्तरा शाखाग्नी हृत्वाभिघार्य श्रपयति ॥ ११ ॥

दे० । ततो नाभिक्रोडयोर्मध्याद्वपामुत्खिदति खड्गेन । देवताभिधानत्वादग्नये जुष्टमवकृन्तामीति मन्त्रेण । उत्खिद्य च वपाश्रपण्या शाखाया[2] प्रच्छादयति । ततश्चरमेऽङ्गारे वपा निगृह्णाति । उत्तरभागे सर्वान्ते योऽवस्थितोऽङ्गारस्तत्र निदधातीत्यर्थ । ततस्ता शाखाया अग्नेश्च मध्येन हरति । दक्षिणभागमानीयोदङ्मुखोऽभिघार्य श्रपयति ॥

आ० । उत्खिद्य वपा देवताभिधानत्वात्[3] मन्त्रेण यथा अग्नये जुष्टमवकृन्तामीति । विशाखामविशाखा च वपाश्रपण्यौ तथा प्रच्छाद्य । उदगग्नेश्चरमेऽङ्गारे सर्वबहि स्थिते वपा निगृह्य निधाय । अन्तरा शाखाग्नी[5] शाखाग्न्योर्मध्येन नीत्वा दक्षिणतो ऽग्नेस्ततो ऽभिघाय श्रपयति ॥

भृता दर्भेषूदगग्रेषु निधायाज्यभागपरिवप्यौ हुत्वा वपा देवताया उपनामयेदुप्यपरिवप्यौ हुत्वा सदर्भे वपाश्रपण्या[6] अग्ना[6] अनु प्रहृत्यापोहिष्ठीयाभिर्मार्जयित्वोक्तान्यवदानानि[7] प्राक् स्विष्टकृता देवतायै बलिं हरेत् ॥ १२ ॥

---

1 Thus Br (text) and all the Mss of Devapāla Ad how ver has probably rightly विशाखामविशाखा च । For these nouns cp Baudh Śrs IV 1 107 3 4 ( the two वपाश्रपणी ) 2 Thus AT शाखाया D and first hand of C शाखाया C second hand 3 Cp LI 4 4 Read तया ( viz वपया ) ? 5 This word inserted by me 6 Thus the sandh according to Br (and cp Ād ) Devapāla s here no authority 7 मार्जयित्युक्ता० the Lahore Ms of Br मर्जयत्युन्यवदा the Bombay Ms 8 Only the Lahore Ms of Br has preserved the complete text the Bombay Ms leaves out the words हुत्वा वपां दे उपनमयेदुप्यपरिवप्यौ The copies of Devapāla g ve the sūtra text intermixed with commentary

द् । श्रृत दर्भेषूदगग्रेषु निदधाति । तदनन्तरमाज्यभागा जुहोति । तत परिवप्यसञ्ज्ञकाववथका होमा जुहोति । तत्र जातवेदो वपया गच्छेत्येक । देवेभ्य स्वाहेति द्वितीय । स्रुवेणाज्येन । तदनन्तर वपा देवताया उपनामयेत् । अयमथ । जुह्वा वपामुपस्तार्य दक्षिणतो ऽसिना सकृदवदाय[3] देवताय दद्यात्तन्नामधेयेन तद्देवतया वचा । उप्यपरिवप्या हु वा सन्भे वपाश्रपण्यावग्नावनुप्रहृत्यापोहिष्ठीयाभिर्मार्जयित्वा उक्तान्यवदानानि प्राक स्विष्कृतो देवताय बलि हरेत् । उप्यो नाम होम । परिवप्यश्च दर्शित जातवेदो वपया गच्छेति देवेभ्य स्वाहेति । ता हुत्वा प्रतिपत्त्यर्थं वपाश्रपणाथ न्भेसहिते वपाश्रपण्या[6] अग्ना क्षिपति तूष्णी । तत आपोहिष्ठीयाभिर्मार्जन तत्रव करोति । चात्वालस्य लुप्तार्थत्वे पात्राभावात् । तदनन्तर प्रकृता यथाचोदितानि हृदयादीन्यवदानानि स्विष्कृत पूर्वं बलिमुपहरेत् । तत्र हृदयस्य शूले पाक शिष्टाना स्थाल्या । द्विर्द्विरवदाय होमो हृदयादिभ्य । तानि हृदयजिह्वाक्रोडमध्य दक्षिणबाहुपार्श्वद्वयगुदश्रोणिमेदोमध्यानि । तत पुरोडाशस्थाने यथादेवतमुपहारेषु चरुमोदकादीनामन्यतम कार्य ॥

आ । श्रृत च दर्भेषूदगग्रेष्ववस्थाप्या ज्यभागा हुत्वा तत परिवप्या जुहोति । जातवेदो वपयेत्येका न्वेभ्य स्वाहेति द्वितीया । तत परिवप्या यौगिकी सञ्ज्ञा । वपा देवताया उपनामयेत् उपनता सबद्धा कुयात् । नामधेयेन तद्देवतया वर्चा । उप्यपरिवप्या हुत्वा । उप्यो नाम होम । त्वामु त्य इत्यनया । तत परिवप्यो देवताभ्य स्वाहा जातवेदो वपयेति च । सन्भे वपाश्रपण्या अनुप्रहृत्य वपा

---

1 I g ve the wl ol of D vap la l e t xt nterm l th comm 2 K th XXX 8 191 1 2 3 Emende l सकृदाधाय AT सकृदाय DC cp Br at the erd of th Kand k 4 Emen led (cp LVII 11) न्वतया the Ms 5 Here Devap la ought to g ve the Mantras for the upya ' 6 श्रपणाग्नौ ACD श्रपणौदग्नौ T 7 स्थान the M (पशुपुरोडाश TA) 8 यदादेवतामुo the Ms 9 Kath XXX 8 190 17 18

धानेर्दर्भै सह आपोहिष्ठीयाभिर्मार्जयते । उक्तान्यवदानानि शूल हृदय जिह्वाक्रोडस्येत्येवमादीन्येकादशोखाया श्रपयित्वा तेभ्या द्विर्द्विरवदाय देवतायै जुहोति । तत पशुपुरोडाशस्थानाय यथा चरितमन्न साधयित्वा लोकाचारप्रसिद्ध यथा विनायकस्य मोदका आदित्यस्यापूपा विष्णो पायस यथाचरित वा । प्राक् स्विष्टकृतो देवतामावाह्य स्रजो गन्धाश्चोपहृत्य धूप प्रदाय सावित्रेण पशु देवतायै बलिं हरेत् । बलिहरणमेव न होम । ततस्त्यङ्गात्स्विष्टकृत जुहोति । सव्याया श्रोणेर्दक्षिणस्य कपिललाटस्य गुदस्येति सकृत्सकृत् समवदायेडामग्न इति । तन्त्रसमाप्ति ॥

यथाचार जप उक्त शेष ॥ १३ ॥ ५१ ॥ (४।११)

द । गतार्थम् ॥

ब्र० ।[4] पशुकल्पे रशनापशुशिरोब धनवपाकतनमन्त्रादिदेवतोद्देशापाय होमपशुनिषेधनादिनिष्कृतिहोमादिवर्ज पाकयज्ञावृदुपचारवच्छ्रा तपाशुबन्धिक सर्वं कर्म तूष्णीमनर्थलुप्त । अत्रेतिकर्तव्यतोच्यते । ग्रामान्निष्क्रम्य गार्हपत्यसमित आयतन उद्धतावोक्षितेऽग्निमासाद्य परिसमूह्य पर्युक्ष्य परिस्तीर्याग्ने पूर्वोत्तरे चतुरश्रायां[6] वेद्या विष्टर मास्तार्य तत्र पशुदेवतामभ्यर्चयेत् । ततोऽग्ने पूर्वार्धेऽवट शाखार्थं खनयेत् । आहरेदाज्यपात्राणि । काष्मर्यमय्या वपाश्र पण्यौ रशना द्विगुणा द्विव्यामा[9] प्लाक्षीमध्यवदानीया स्वधिति कुम्भी स्थल शाखा प्रक्षालित पशु पन्नदन्तमव्यङ्ग यवमती पृषदाज्याथ दधि चर्वर्थान्व्रीहीन् येन चाथ । उत्तरत सस्तार्णे आज्यपात्राणि प्रयुज्य प्रोक्षण्युपयाम स्रुकस्रुवौ दर्भे यूषपात्र

1 Emended (cp M n s s I 8 5 19) ततस्यङ्गात्० । 2 Cp XLVII 13 3 Cp L 3 4 4 Now follow the whole of Br on this Kandik 5 Cp XIII 8-9 6 चतुराश्रायां Bombay चतुश्रायां Lahore 7 Uncertain पूर्वार्धेभ्यां वध Lahore पूर्वार्धेत्या (or त्यां or न्त्या) वट Bombay 8 Cp LI 2 9 Thus Lahore व्यपा Bombay 10 शूल Lahor 11 Lahore in आज्यदानीं द्वय । 12 दर्भे both

विष्णोमनसा[1] देवो व तानि प्रोक्ष्याज्य साधयित्वा दधि च निर्वपति । स्रुक्स्रुवा समृज्य चतुर्गृहीतमुद्धृत्य निरुप्ते दध्नि घृतमासिच्य । तस्य पश्वभिघारण वनस्पतिं च यजति । आस्तीर्णे स्रुच निधायाघारसमिधा आधाय स्रव दक्षिणा स्रुचो निद्धाति । ततो मूलमध्याग्रदेशषु यवमताभि शाखा प्रोक्षति । गर्तेऽपो यवमतीश्च प्रासिच्य त दर्भैरास्तीर्य तेषु घृतमासिच्य शाखामग्रा प्रभृत्य ग[3] समा गर्ते निहत्य परिस्तार्य वेदिमुदक्तूल मासनमास्तार्य तत्रोपविश्याघारादिराष्ट्रभृदन्त जुहुयात् । तत प्रजापतजायमान इति द्वाभ्यामुपाकरणाया हु वा दर्भेण पशुमुपा करोति प्रत्यञ्चख शाखान्ते ऽवस्थाप्य । रशना तूष्णीमादाय ऋतस्येति दक्षिणेऽर्धशिरसि बध्नाति यथादेवत । शाखाया तूष्णी नियुज्य प्रोक्षति पाययति । उल्मुकेन त्रि परिहृत्य पशुमा यमव घ्राप्यापाव्या जुहोति प्रजानन्त इति पश्चभि । वपाश्रपण्यौ दर्भाश्चा दाय प्रमुच्य शाखाया पशुमुदञ्च नयत्युल्मुकमग्रतो हरति । वपा श्रपणाभ्या पशुमभिनिधाय[6] सन्दीपयत्युल्मुक । स पशुश्रपण । तस्माद्दक्षिणा प्रत्यगग्र दर्भमास्तृणाति । तस्मि प्रत्यक्छिरसमुदक्पाद पशु सञ्ज्ञापयन्ति । दक्षिणापाद पितृभ्य । सञ्ज्ञप्यमान उपावृत्य पृषदाज्यमीक्षते इह प्रजा इति[7] आ सञ्ज्ञापनात् । सञ्ज्ञप्ते यस्मान्धीषा

1 K th I o n t  2 यणत Bombay  3 oप्रभृत्यर्थे Bombay प्रत्यत्यथा L l or  4 Fo the follow ng p I I 5 ɔ K tl III o 25 8 ( u to जुष्ट )  6 Th is Lahore मुच्य nstead of पशु Bombay  7 The three vers s not found in the p inted K thaka more probably given akalapathena n the Katha yajnas tra The fi st is इह प्रजा विश्वरूपा रमन्ताम् cp Āp rs VII 17 1 the second यासामूढ (nearly identical with Āp l c ) the third आयन्तु मधुमतीर्महाना ( ) अक्षितिं पय । गावो घृतस्य मातर इह न सन्तु भूयसी ।

न्यसद् इति[1] प्रतिपशु पञ्चदश प्रायश्चित्ताहुतीर्जुहोति । तत एक श्रृङ्गया वपाश्रपण्या रशना परिहृत्याभ्युक्षत्येकश्रृङ्गा । यथोक्तमद्भि प्राणायतनानि स्नापयति । उदकहस्ता पत्न्याग्निमु पतिष्ठते नमस्ते आतानेति । अनर्वेति गच्छति । देवीराप इत्युदक मभिमन्त्र्य तेन पशो प्राणायतनानि स्नापयति प्राण त इति यथा लिङ्ग । समद्भ्य इति भूम्या शेष । एव पत्न्या प्राणायतनेषु स्नापितेष्वन्तरा नाभिक्रोडं दर्भम तथायासिना छित्त्वा सव्ये पाणा दर्भाग्र निधाय दक्षिणेन लोहितेनाक्त दर्भमुपासिच्य पाण्या निर्मृजति[3] । उत्खिद्य वपा शाखा विशाखा च प्रच्छाद्याद्भिरवोक्ष्य । अग्निपशुलोहिता करोति । अमुष्मै त्वा जुष्टमवकृन्तामीति यथादेव तमवकृन्तति । अपिधाय पशोश्छिद्र दर्भाग्रमग्ना प्रास्य चरमेऽङ्गारे वपा निगृह्यान्तरा शाखाग्नी हृत्वाभिघार्य श्रपयति । श्रृत दर्भेषूद गग्रेषु दक्षिणत एव निधाय स्वस्थान उपविश्याज्यभागौ वार्त्रघ्ना हुत्वा जातवेदो वपया देवेभ्य स्वाहेति स्रुवेण परिवप्या जुहुयात् । ततो वपा देवताया उपनामयेत् । उपस्तीर्य हिरण्यशल्कमधिन्यस्य पूर्वेण शाखा दक्षिणा गत्वासिना वपा सकृदवदाय तेनैव प्रत्येत्यो परिष्टाच्च वपाया हिरण्यशल्क निधाय द्विरभिघार्य नामधेयेन तद्देवतया वर्चा जुहुयात् । हुताया वामु त्य इत्युप्य स्वाहा देवेभ्या जातवेद इति च परिवप्यो जुहुयात् । द्विपशा उप्यपरिवप्या नामावृत्ति । ततोऽन्तरा शाखाग्ना सदर्भे वपाश्रपण्या आनायाग्ना अनुप्रहृत्यापो हि ष्ठेति तिसृभिमार्जयते । उक्तानि हृदयादीन्य वदानानि पशुबन्धे । तानि स्थाल्या श्रपयति शूले हृदयमसभिन्न

1 The fifteen Mantras: यस्माद्भीषा न्यसदस्ततो न अभय कृधि । अभय न प्रजाभ्यो नमो रुद्राय मीढुषे ॥ 1 ॥ अमुष्मै भाग सुवित ददातु इम यज्ञ यजमान च सूरिम् । यो नो द्वेष्टि अनु त रभस्वानागसो यजमानस्य वीरा ॥ 2 ॥ य इदमगस्तस्मै स्वाहा ॥ 3 ॥ यस्माद्भीषावासिष्ठा ततो etc as 1 ॥ 4 ॥ अमुष्मै etc as 2 ॥ 5 ॥ य इदम etc as 3 ॥ 6 ॥ यस्माद्भीषावासिष्ठा etc ॥ 7 ॥ अमुष्मै etc ॥ 8 ॥ य इदम ॥ 9 ॥ यस्माद्भीषापलायिष्ठा etc ॥ 10 ॥ अमुष्मै etc ॥ 11 ॥ य इदम० ॥ 12 ॥ यस्माद्भीषा समुत्कस्था etc ॥ 13 ॥ अमुष्मै etc ॥ 14 ॥ य इदम० ॥ 15 ॥ 2 Kath III 6 25 1, 96 1 3 The Lahore निर्मृज्यजति Bombay

वृक्का अनिनीडिते गुदे । गर्त खात्वा तस्मिन्नुवध्य कुर्यात् । श्रप्य माणेष्ववदानेषु पशुपुरोडाशस्थानीय चवर्थ पात्रशेष प्रयुनक्ति । यद्देवत्य पशुस्तद्देवत्या व्राहिमयश्चरु । पाणी प्रक्षाल्य सशूपा स्रुचमादाय सावित्रादिना यथादेवत निवपति । प्रोक्षणा साधयित्वा सावित्रादिना यथादेवत प्रोक्षति । तूष्णीं पात्राणि प्रोक्ष्य कृष्णाजिन मुलूखलमादाय व्रीहीनवहन्ति । प्रक्षाल्य तण्डुला पवित्रान्तर्हिता नावपति । प्रक्षाल्याग्रतो मेक्षणमवदधाति । उल्मुकेन त्रि परिहृत्य बलिहरणाथ तूष्णीमुपचरित स्थालापाक श्रपयेत् । शृत पशा पशुचरुणा प्रचरति । शृतमभिघार्योदगुद्वास्यालकृत्य पा‍त्या सान्यत्य भिघाय वेद्या बहिष्यासाद्य चाभिघारयति । स्रुच्युपस्तीय मक्षणे नावदायाभिघार्य चरु प्रत्यभिघाय नामधयेन तद्देवतया वर्चा जुहुयात् । इष्टे स्विष्कृतमग्नि सुदीमित्यग्नये स्वाहेति वा । मेक्षण मनुप्रहृत्य । ततो दर्भोपयाम पृषदा‍ज्यस्य स्रवेण प्रगृह्य स्थलाद्व‍ यमभिघारयति । पशु चान्तरा शाखाग्नी हृत्वा दक्षिणतोऽग्नेर्दर्भेषु निदधाति । स्रुचि यूषपात्रे चोपस्तार्य[6] प्लाक्षामग्र ऽसिना हृदयस्या वद्यति प्रान्ताज्जिह्वाया उत्सादता द्वितीय क्रोडस्य कपिललाम्स्य पार्श्वयोर्यक्नो वृक्कयोर्गुदस्याणायस्य[9] श्रोणेर्मन्सो हिरण्य च यूषपात्रे स्वधि‍यन्तर्हिते यूषमासिच्याभिघायावदानानि वसा च नामधेयेन तद्देवतया वचा जुहुयात् । यत्र मेर्चे ऽनूक्त यूषा य जुहोति घृत घृतपावान इति [1] हुतेषु प्रधानावदानेषु शेष दिश प्रदिश इति[1] । यदि नामधेयन पुरस्ताच्चोपरिष्टाच्चावदानाना वसाहोमः । ततः पृषदाज्यस्य सकृच्चतुर्वावदाय वनस्पते रशनयेति हुत्वा ।

1 ? Tl is Bo l ay अनिडेन्गिति I l ɔ ɔ तस्मिन्नवध्य l tl 3 Thı Lal o oपुरोडाशस्थालपाक Bo bay 4 K th XVIII 21 283 1 2 5 The t o worl c ly Lal o e 6 पस्तीर्येण Bombay ( Thı Lal ore प्रक्ष्यामग्र Bombay read प्लक्षायामग्रे ? 8 Cp M n rs I 8 5 18 9 oणीयस्थ Bombay णायस्थ Laho e 11 Kath III 7 26 13 121 14 13 Kath XVIII 21 2( 2 10 11

नत ऋतुतिथियागानि परिते दृडभो रथ इयन्त[1] इत्वा। प्राक्
स्विष्टकृतः पशुदेवताथ मधुपर्कपूर्व सावित्रेण बलिमुपहरेत्[2]। यथा
चार तल्लिङ्गम त्र जपत्[3]। ततः स याया श्रोणेदक्षिणस्य कपिल
लान्स्य गुन्स्य स्थवायस इति सोविष्कृताना सकृत्सकृत्समवदाय
द्धरभिघाया देवानामिति[4] जुहुयात्। हाविरुच्छिष्टमुद्वास्य त्व ना
अग्न इत्यादि तन्त्रसमाप्तिः। यानावह यदद्य त्वा यज्ञ यज्ञ गच्छ
दवा गातुविद इति[6] चतसृभिऋग्भि पूर्णां जुहुयात्। उक्त शेष
ति शूलकमान। शामिता शूल पराचीनताक्ष्ण निखाय तस्मिन्स
पत्नीका मार्जयन्ते याम्रो याम्न इति द्वाभ्या। सुमित्रा न इत्यु
पस्पृश्य द्वीपे राज्ञ[9] इयुपस्थायानपेक्षमाणा आयान्ति समिध
मचिन्वानाः। एधो ऽसीत्यग्ना समिधमादधाति। समिदिति द्वितीया
तजो ऽसीयग्नि तेजो मयि धेहीत्याामान[1] । तूष्णीं पत्नी॥

---

अथ शूलगव ॥ १ ॥

द०। अथशब्दो नित्यात्पशुकल्पाद्विवक्षितस्य कामस्यान तर्यमाह।
नित्य पशुत त्रमुक्त। अनन्तर काम्य वक्ष्याम इत्यर्थः। शूलगव
इति कर्मनाम। शूले सर्वाण्यवदानानि पश्यन्तीत्यत्र[1] गारपि च
पशुरित्यचक नाम। अवदानहोमान्तत्व च छागपक्ष एव। गो
पुनरुत्सर्ग एव लोकविरोधात्॥

आ०। शूलगव इति कर्मनामधेयम्॥

सर्वेभ्य कामेभ्य ॥ २ ॥

दे०। कामयन्त इति कामः स्वर्गादिफलविशेषाः। तादर्थ्ये चतुर्थापया
येण सर्वकामसिद्धिर्न समुच्चयेनेति योगसिद्ध्यधिकरणे व्यव
स्थितम्॥

---

1 K th VII 2 64 9-6 (p nfra LXXIII 9) 2 Cp LI 12 t 3 Cp II 13 4 K th II 15 22 1 2 5 Cp XLVII 14 6 Kath IV 12 37 7 13 7 Cp II 13 8 Thus Lahore निक्षिप्य Bombay 9 Kath III 8 26 1-8 10 Cp II 1 2 11 The mean ng of these and the following words is ot lear to me

अ । शूलगवस्य प्रजापशुभूत्यादिकामानामेकतममिच्छन्ननुष्ठान। कालस्य चानियम ॥

आ । सर्वेभ्य कामेभ्य क्रियते प्रतिकाम प्रयोगः ॥

शरदि वसन्ते वा ॥ ३ ॥

दे । कालविकल्पार्थमेतन्नियम स्यादित्येके ॥

अनियम स्यादित्येके ॥ ४ ॥

दे । एके पुन कालनियम नानुमन्यन्ते । तेन यदा कदा चित्कर्तव्य शूलगव ॥

आ । अनियमो वा कालस्य स्यात् ॥

गवा मध्य उत्तरतो ग्रामस्य वेद्याकृतिं कृत्वा शाखाभि परिवार्या तष्ट यूप तूष्णीमुच्छ्रयन्ति ॥ ५ ॥

दे । ग्रामस्योत्तरदेशे गवा मध्य वेद्याकृति कृत्वा पाशुकीमेव वेदि चतुरश्रा कृत्वेत्यथः । ता वेदि वृक्षशाखाभि परिवृत्य । अतष्ट तक्षणरहित यूपमुच्छ्रयन्ति । यूपशब्दस्य सस्कारशब्दत्वा मन्त्रे प्राप्ते तदपवादस्तूष्णीमिति । उच्छ्रयन्तीति बहुवचननेति नोच्छ्रयणस्य नियतकर्तृकत्वमाह ॥

अ । गवा मध्य उत्तरतो ग्रामस्य यावदर्थं चतुरश्रा वेदिं कृत्वा यज्ञियवृक्षशाखाभिरूर्ध्वाग्राभिः परिधाय ॥

आ । गवा मध्ये कर्तव्यः । गवामास्थिरत्वाद्गोष्ठप्रायो देशो लक्ष्यते । उत्तरतो ग्रामस्य वेद्याकृतिं कृत्वा । चतुरश्रा वेदिं कृत्वा । आकृतिग्रहणादमन्त्रका । ता च शाखाभिवार्क्षीभिः परिश्रित्या तष्ट यूप तूष्णीमुच्छ्रयन्त्यग्नेः पूर्वार्धे । यूपशब्दस्य सस्कार वचनात्तूष्णीं ग्रहणम् ॥

तमपरेण यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा भवाय शर्वाय शानायेश्वराय पशुपतयेऽधिपतय इति गामुपाकरोति पशु वा ॥६॥

द० । त यूपमाश्रित्यापरेण पश्चिमभागे यथोक्तमुपसमाधानादिक माज्यभागान्त कृत्वा । जयप्रभृतिभिर्हुत्वेति स्थालीपाकतन्त्र मन्त्राराष्ट्रभृत्तत्पर्यन्तमुपलक्षयति । भवाय त्वामुपाकरोमीति

शत्राय त्वामुपाकरोमीत्यादिना मन्त्रषट्केनोपकल्पयामीत्यन्तेन गामुपाकरोति । पशुं वा छागम् ॥

ब्र० । तमपरेणोद्धताविक्षिते ऽग्निमासाद्य परिसमूह्य पर्युक्ष्य परिस्तीर्य वेद्यां कलशेषु विष्टरेषु वा भवादीनभ्यर्च्य पशुकल्पमत्र प्रवर्तयेत् । नात्र शाखा निहन्यते । तत्र तु बिल्वं खादिरं पालाशं वा यूपमरशनमस्वरमचषालं यथाकालं तूष्णीमुच्छ्रयन्ति । उपाकरणाय हुत्वा गामजं वोपाकरोति ऋतस्य त्वा देव हविः पाशेन प्रतिमुञ्चामि[1] भवाय शर्वाय ईशानाय इश्वराय पशुपतयेऽधिपतये जुष्टमिति रशनयार्धशिरोबन्धनम् ॥

आ०। तं यूपमपरेणाग्निं यथोक्तमुपसमाधाये याज्यावेक्षणादिराष्ट्रभृदन्तं तन्त्रमुपलक्षयति पाशुकं । प्रागाज्यभागाभ्यां दर्भेण भवाय शर्वायेशानायेश्वराय पशुपतयेऽधिपतये त्वामुपाकरोमीति गामुपाकरोति । पशुव प्राग्न[?] युरसि सर्वनश्च । तूष्णीमुपाकरणादि सर्वत्र । पाययत्यपः । पर्यग्निं करोति । घृतमवघ्राप्य । आपाव्या जुहोति प्रजानन्त इति पञ्चभिः । देवताहोमवर्जं । उपाकरणायहोमा न भवन्त्यचोदितत्वात् । हुत उल्मुकं हरत्युत्तरस्यां दिशि पशुश्रपणार्थं । निबध्यमानाय प्रत्यगग्रं दर्भमवास्यति । तस्मिन्दर्भे यथोक्तं प्रत्यक्शिरसमुदक्पादं बहुवचनेनान्येऽपि संज्ञापयन्ति । संज्ञप्ते प्रमापिते यथोक्तग्रहात्पत्नी समन्त्रकमद्भिः पशोः प्राणायतनानि स्नापयति । कथं । उदकहस्ता पत्न्यादित्यमुपतिष्ठते । नमस्त आतानेत्यादि शमद्भ्य इत्यादिना भूम्यां शेषमित्यन्तेन । ततोऽध्वर्युरुत्खिद्य वपां देवताभिधानवता मन्त्रेण भवाय शर्वायेशानायेश्वराय पशुपतयेऽधिपतये जुष्टमवक्त्रनामाति विशाखामविशाखां च वपाश्रपण्या वपया प्रच्छाद्योदगग्नेश्वरमेऽङ्गारे सर्वबहिःस्थिते वपां निगृह्य निधाय । अन्तरा यूपाग्नी हृत्वा दक्षिणतोऽग्नेस्ततोऽभिघार्य श्रपयति । श्रुतं च दर्भेषूद

1 Kath III 5 25 8  2 Cp LI 6  3 Cp LI 4
4 Inserted by me cp LI 6  5 Thus here with श ( not स० )

गग्रेषु पश्चादग्नेरवस्थाप्य यथेत प्रत्येत्य स्रुचाज्यभागो हुत्वा ततः परिवप्यो जुहोति । जातवेदो वपयेत्यका । देवताभ्य स्वाहेति[1] द्वितीया । ततो देवताभ्य उपनामयत्सकृदेव । ता वपामनुद्ध य[2] नामषट्केन जुहोति भवाय शर्वायेशानायेश्वराय पशुपतयेऽधिपतये स्वाहेति । तत उप्यपरिवप्या हुत्वा । उप्या नाम होम । वामु ये दधिर इ यनया[3] । तत परिवप्या । देवताभ्य स्वाहा । जातवेदो वपय येष । एते स्रावा । तत सदर्भे वपाश्रपण्या अग्ना अनुप्रहृत्य वपाधारदर्भे [4] सहेत्यथः । तत उत्तरतोऽग्नेरापोहिष्ठायाभिरध्वर्युमाजयते । उक्तान्यवदानानि । शूले हृदय जिह्वायाः क्रोडस्यत्येवमादान्येकादशोखाया श्रपयि त्वा तेभ्यो द्विद्विरवदाय दवताभ्यो जुहाति भवाय शर्वायशाना येश्वराय पशुपतयेऽधिपतये स्वाहेति । नह वनस्पतियाग न च पृषदाज्यमस्ति विकारेषु यथाचोदितमिति वचनात् । तत ऋतुतिथ्याद्युपहोमान्तम् ॥

प्रतिनाम प्रतिद्रव्य प्रत्यनुवाकमिति षट् पुरोडाशानेककपाला स्तूष्णीमुपचरिताञ्श्रपयित्वा प्राक् स्विष्टकृत षड्लोहितमला न्पात्रेषु दर्भेषु वा कल्पयित्वा नमस्ते रुद्र मन्यव इति षड्भिर नुवाकैरुपतिष्ठत ईशान त्वा शुश्रमति च सर्वत्रानुषजति ॥७॥

द । प्रतिनाम प्रतिद्रव्य च पाशदानानि । द्रव्य द्रव्य प्रतिद्रव्य । अनुवाका षड्रुद्राभिधाना । अनुवाकमनुवाक प्रत्यनुवाक । इतिश दोऽधिकरणप्रधानः । इह यद्वपावदानादिक कर्म प्रधान त प्रतिद्रव्य क्रियमाण प्रतिनाम प्रत्यनुवाक च कर्तव्य । तथा षड्भिरनुवाकयथासख्यमेकैकन भवादिनामशब्देन युक्ताविप र्यायाः षड्ढोमा । तथा हृदयाग्भ्यि एकैकस्माद्द्विद्विरवदाय

1 Instead of देवेभ्य स्वा　2 Is th s r ght?　3 Cp Ad on LI 12　4 On LI 12 A l वपाधान　5 Kath XVII 11 16 (p 254 1 260 13)　6 The text of the sutra proper has d sappeared from the copies of Devapala

समुदाय कृत्वैवमेव[1] षड्उपहारा । एकैकस्मिन्कपाले निवृत्तान् षट् पशुपुरोडाशास्तूष्णीं मन्त्रव्यतिरेकेण निर्मिताञ्श्रपयित्वा स्विष्टकृत पूर्वं बलिषट्कमकैकेन पुरोडाशेन भिन्नभिन्नपात्रस्थेन भिन्नभिन्नदर्भस्थेन वा पशुलोहितालिप्तेन कल्पयेत् । देवस्य त्वा सवितु प्रसवेऽश्विनोर्बाहुभ्या पूष्णो हस्ताभ्या भवाय जुष्ट कल्पयामीत्यादय कल्पन षण्मन्त्रा । कल्पयित्वा च नमस्ते रुद्र मन्यव इति षड्भिरनुवाकैरुपस्थान कृत्वा बलि हरेत् । ईशान त्वा शुश्रुमेति च सर्वत्रानुषजति । ईशान चेति वाक्य शेषमनुवाकषट्केन सब धयतायर्थ । ततस्त्रिभ्योऽङ्गेभ्यः सकृत्सकृ समवदायाग्नये स्वाहेति स्विष्टकृत यजति । पूर्वोक्त मन्त्रेणेत्येके । अनेनैव च समाप्ति । तता वपाश्रपणी सदर्भे पूर्ववदग्नौ प्रहरति प्रोक्षति चापोहिष्ठायाभि ॥

ब्र० । अत्र षट पुरोडाशानेककपालप्रमाणान्यथाकाल श्रपयेत् । प्राक स्विष्टकृतः षड् लोहितबलीन् षट् च तान्पुरोडाशान्भवादिभ्य षड्भ्यः प्रतिनामकक सावित्रेणोपहृत्य नमस्ते रुद्र मन्यव इति षड्भिरनुवाकैरेककेनानुषङ्गेणोपतिष्ठते । यथा । सावित्रादिना भवाय बलिमुपहरामीति । रुधिरबलि पुरोडाश च पात्रेषु दर्भेषु वोपहृत्य नमस्ते रुद्र मन्यव इत्यनुवाकेन ईशान त्वेति च[3] तिसृभिरुपतिष्ठते । एवमेव शर्वायोपहृत्य नमो हिरण्य बाहव इति सानुषङ्गेणोपस्थान । ईशानायोपहृत्य नम इषुकृद्भ्य इति सानुषङ्गेण । ईश्वरायोपहृत्य नमो गिरिशायेति सानुषङ्गेण । पशुपतय उपहृत्य नमः सृत्यायेति तद्वत् । अधिपतय उपहृत्य नमो वः किरिकेभ्य इति सानुषङ्गेण । तत पशुस्विष्टकृत् ॥

आ० । ततः षट् पुरोडाशानेककपालास्तूष्णीमुपचरितान्श्रपयित्वा पशोर्लोहित गृहीत्वा लोहितमिश्रान्पुरोडाशा प्राक स्विष्टकृता देवताभ्यः षड्भिर्नामभिर्नमस्कारान्त स्रजो ग धाश्चोपहृत्य

---

1 Emended कृत्वेवदेव the Ms  2 वाकैर the Ms
3 Both the Mss चतसृभि but Devapāla ı h s Mantrabh ya comments upon Kāth XL 5 139 5 10

धूप प्रदाय न्ाप च द न्वा प्रतिनाम बलिमुपहरे प्रत्यनुवाक च जप । अत्र षट् नामानि षट् पुरोडाशा लोहितमिश्राः षट् चानुवाका । तेषा प्रतिनाम प्रतिद्र न्य प्र न्यनुवाक चतुरुपहार कम । तत्रोदाहरण । यथा । लोहितमिश्र पुरोडाश पात्रे गृहा न्वा देवस्य न्वे न्यादिना पूष्णो हस्ताभ्या भवाय बलिमुपहरामाति । दर्भेषु चोदगग्रे कल्पयि न्वा नमस्ते रुद्रत्यनुवाकेनापस्थान । इशान न्वे न्यनुषङ्ग प्रत्यनुवाका न्ते । ततो द्वितीय सलोहित पुरोडाश देवस्य न्वेत्यादिना पूष्णो हस्ताभ्या शर्वाय बलिमुप हरामाति कल्पयि न्वा नमो हिरण्यवाहव इ न्यनुवाकेन इशान न्वे न्यनुषङ्गा न्तेनोपस्थान । एव प्रतिनाम प्रतिद्र न्य प्रत्यनुवाक षट् कर्माणि । ततस् न्यङ्गास्विष्टकृत । स्विष्टकृद न्ते च यथाश्रद्ध कर्त्र ब्राह्मणभ्यश्च दक्षिणादान । ततस्त न्त्रसमाप्तिः ॥

प्रभूता ब्राह्मणा भाजयन्ति ॥ ८ ॥

दे० । यथाशक्ति ब्राह्मणा मासेन भाजयन्ति ॥

ब्र । षण्णामतेषा प्राणनाय बहुब्राह्मणभोजनम् ॥

नापक्व ग्राम प्रवेशयन्ति ॥ ९ ॥

द । अपक्वमपि ग्राम न प्रेवशयन्ति । का वाता । पक्वस्येति केचित् । अपरे तु पक्वस्य ग्रामप्रवेशनमिच्छान्ति कदाचित् ॥

आ० । नापक्व मास ग्राम प्रवेशयन्ति । पक्वस्य तु न दोषः ॥

शिष्ट भूमावर्पयन्ति सचर्म ॥ १० ॥

दे० । मुच्यमान पक्वमपक्व भूमा प्रक्षिपन्तीत्यर्थ । सचर्म चर्मणा सह ॥

ब्र । पक्वशिष्ट सचम भूमावपयन्ति तत्रव ॥

आ० । शिष्ट यत्पक्तु न शक्यते तच्चर्मणा सह भूमावर्पयन्ति ॥

अनपेक्षमाणा आयान्ति[3] ॥ ११ ॥ ५२ ॥ ( ४।१२ )

---

1 Cp Ad on th s sutra 2 The Lahore Ms of Br s the only one that ead भूमा अ । 3 Thus the Bombay M of Br and of th Mss of Devap la T ( n C and D the last passage s miss g) and cp Br at the end of Kandika LI आयन्ति the Lahore Ms of Br and of the Mss of Deva pala A and Ad

दे० । यज्ञस्य भूमिमपश्यन्तो ग्राममागच्छन्तात्यथ ॥
आ० । अनपद्ममाणा देवयजन गृहानायन्ति ॥

---

औपसदे ऽग्नौ साय प्रातरग्निहोत्रदेवताभ्यो जुहुयात् ॥१॥

दे० । औपसदो ऽग्निरुक्त । एष आपसदोऽग्निस्तस्मिन्पाकयज्ञा इति[1] । स च गार्हपत्य ग्रम इत्यग्निहोत्रादिसदृशस्तत्र कर्म भिरुक्त भवितुमतस्तस्य जागरणायाग्निहोत्रादिसदृशानि कर्माणि तत्रोच्यन्ते । ता येवेतानाति भ्रमणीय देवताग्रहणान्कालाभिधा नाद्याग्निहोत्रादिके सति तद्रूपाकृष्टवादेव दवताकालाद्व्यथ तदुपदान । तस्मिन्नग्निहोत्र जुहुयादित्येतावता सिद्धिः देवता ग्रहणादेव च नामधेयेन होतव्य न मन्त्रेण । अग्निहोत्रदेवता स्त्वग्निसूर्यप्रजापतयः । अग्नये स्वाहेति साय सूर्याय स्वाहेति प्रात । प्रजापतये स्वाहेत्युभयत्र मनसा । अर्थादिष्ट द्रव्य साहश्याद्दधिघृतादयो यवादीनामन्यतम तदभावे[3] तण्डुला ॥
ब्र० । औपसदेऽग्नौ सायमस्त सूर्ये निम्रुक्ते होमकालोऽनुदिते निशान्ते प्रातः । उदये न सायमाहुतिरतिपद्यतेऽस्तमये न प्रात । आहुत्यतिपत्तावतिक्रान्तहोम हुत्वाग्नये पथिकृते चरु निरुप्याग्ने नयेति प्रधान । एवमेव व्युत्क्रमातिपत्ता । उभयातिपत्ता तु ज्वलत्यग्नये त न्तुमते चरु निरुप्य व्व न स्त न्तुरिति यजेत् । उपशान्ते तु यथापूर्व सस्काराणामनेकातिपत्तौ परिसख्ययाति क्रान्तहोमान्हुत्वाग्नये शुचयेऽग्नये पवमानायाग्नये त न्तुमते ऽग्नये पथिकृत इति चतुर्भ्यश्चरु निरुप्योदग्ने शुचयस्तवाग्ने पवस्व[7] व्व नस्त न्तुरग्ने नय सुपथेति यजेत् ॥ अथ सायप्रातर्होमे परिसमूह्य पर्युक्ष्य चातुष्कोष्ठः स्तर परिस्तीर्य पयो यवागु वाधिश्रित्य स्रुव सम्मृज्य दर्भोपयाम

---

1 Cp XLVII 1 2  2 धर्मेत्यग्निहो the Mss  3 तदभाव the Mss  4 सायमाह्न the Bombay Ms (and cp Kath VI 5 54 5) सायमग्नि the Lahore Ms  5 Kath III 1 23 1 2  6 Kath XL 12 147 1-2  7 Kath XL 14 150 3 4 and VII 16 79 16-17

स्रुवेणाग्नये स्वाहा प्रजापतये स्वाहेति सायमाहुतिद्वय जुहुयात् । सूर्याय स्वाहा प्रजापतये स्वाहेति प्रातर्दीर्घो प्रथमा परिमण्डल[1] । तस्या पूर्वार्धे मनसा प्राजापत्या भूयसा द्वितीया च । तत परिस्तरणानि नाग्वाग्नि मुञ्चेत् । पयोयवाग्वोरभावे व्रीहान्यवास्तण्डुला वा । त्रि प्रक्षाल्योल्मुकेनाभिघाय[2] पाणिना दर्वतीर्थेन जुहुयात् ॥

आ० । औपसदग्रहणमाहिताग्न्यथ[3] । आहिताग्नेरन्यकृतत्वात् पिण्डपितृयज्ञवत्[4] न[4] प्राप्नोति । तत्प्राप्तय औपसदग्रहण । अनाहिताग्नेस्तु तस्मिन्पाकयज्ञा इत्यनेनैव सिद्ध । साय प्रातरग्निहोत्रदेवताभ्यो जुहुयात् । देवताग्रहण मन्त्रनिवृत्त्यथ । तेन नामधेयेनैव होम । अग्नि सूर्य प्रजापतिश्चाग्निहोत्रदेवताः सायप्रातर्व्यवस्थया ॥

पर्वणि भार्यामुपवास्य दर्शपूर्णमासदेवताभ्यो जुहुयात् ॥२॥

दे । दर्शपूर्णमासदेवताभ्योऽग्निविष्णुप्रजापत्यग्नीषोमेन्द्रेभ्यो जुहुयादेकस्मात्स्थालीपाकात्प्रतिदेवत चतुरवत्तेनोपांशुयागवाज्येनैव जुहुयात् । सानाय्यवपातसोमस्य दशपूर्णमासयोर्नास्ति । का वार्ता । तत्सदृशेषु पाकयज्ञेषु । पर्वणीति कालविशेषविधिः भार्यामुपवास्येत्युक्तो दण्डापूपिकया यजमानस्याप्युपवासः प्रतीयते । अपरेऽपरथाचक्षते । भार्यामुप समीपे वासयित्वा संनिधाप्य जुहुयात् । दर्विहोमवदपूर्वत्वादत्र[5] पूर्वत्र च परतन्त्राभाव ॥

आ० । पर्वणि भार्यामुपवास्य दण्डापूपिकया[6] स्वयमुपोष्य[6] । अथवा दर्शपूर्णमासप्रकृतित्वे[7] आपवस्त्रमुभयोः प्राप्त । तेन भार्यामुपवास्येति वचनात्तयोरापवस्त्रमेव भवति न तु व्रतोपायनादि । अथवा भार्यया वियोग पर्वणि न कर्तव्य । तामग्नि

---

1 मण्डला the Bombay Ms 2 The same expression Kath XXXI 7 9 5 but the Lahore Ms भिघाय which probably is a better reading 3 ग्रहणाहिता the Ms 4 पितृयज्ञवन्न the Ms 5 Thus T दर्शे the other Mss 6 पूपिकाद्वयमुपाष्य the Ms 7 प्रकृतिद्वे the Ms

समीपे वासयेन्नित्यर्थ । दशपूर्णमासदेवतासकाशात प्रागोपवस्त्रा द्भव यवति कश्चित् । दशपूर्णमासदेवताभ्यो जुहुयादविशेषणया दशपूर्णमासदेवता । उपांशुयाजश्च भवति । पुरोडाशयो स्थाने तु चरुरवेके मरुता चरुमिति दर्शनात् । आज्य हविरना देश इति[1] वचनादन्ये आज्येन दर्शदेवताहोम मन्यन्ते । तदसत् । अथ पाकयज्ञास्तस्मिन्पाकयज्ञा इति पाकयज्ञशब्दाद्दर्शपूर्ण मासप्रकृतय पाकयज्ञा इति[3] च तत्प्रकृतिकत्वात्स्थालीपाको युक्ततर । स चरुरेव पक्वकद्रव्यमात्रसाध्यत्वात्पाकयज्ञत्वाद्ध विभेदा नात्र विवादस्तत ॥

नवस्याग्रायणदेवताभ्यो ऽज्यानीभिरभिजुहुयात् ॥ ३ ॥

द० । पर्वणीत्यनुवर्तते । नवस्यान्नस्याश जुहुयात् । काभ्य । आग्रायणेष्वेवनाभ्य । या आग्रायणे वैदिके देवतास्ताभ्य एव गृह्याग्नावपि जुहुयात् । ता पुनरग्नेन्द्रा विश्वे देवा द्यावापृथिवा सोम इति । यवास्तु हवि । अज्यानाभिरिति[4] मन्त्रनिर्देश । तास्तु षट् । प्रत्यृच होमश्चतुरवात्तेन स्रुवेणाभिघृतेन । पूर्वत्रापि तुल्यमेतत् ॥

ब्र० । अग्नि परिसमूह्य पर्युक्ष्य परिषिच्य परिस्तीर्य । अग्नेन्द्रा विश्व देवा द्यावापृथिवा सोम इति शरदि चतस्रो नवाग्रायण देवता । इन्द्राग्नी विश्वे दवा द्यावापृथिवा इति तिस्रो ग्रीष्मे । सर्वेषा पृथक् चरव । पयसि तु वैश्वदेव सौम्य श्यामाकश्चरु शरदि व्रीहीणामाग्रायण ग्रीष्मे यवाना । सुकर्माणो ये के च ज्मा[6] घृतवता[7] या ते जामानाति चतस्रा हविषा शरदि याज्या । शुचि नु[9] ये के च ज्मा घृतवती इति तिस्रो ग्रीष्मे शतायुधायेति[1] षड्भि प्रधानादनन्तरमभिहोम ॥

---

1 Quoted from the Paribh a kh nda of the Katha yajnas tra 2 See XIII 1 and XLVII 2 3 Se XIII ( 4 Emended आज्यधानीभि the Mss 5 Kath XIII 15 197 7 8 6 Kath XIII 15 197 15 16 7 Kath XIII 15 197 17 18 8 Kath XIII 15 196 21 22 9 Kath XIII 15 197 11 12 10 Kath XIII 15 197 20-198 10

आ । पर्वणीत्यनुवर्तते । नवस्य हवींषि कु वाग्नेन्द्रो विश्वे दवा द्यावापृथिवा सोम इति शरद्याग्रायणदेवता । ग्रीष्मे पुनरिन्द्राग्ना विश्वे दवा द्यावापृथिवा इति । द्रव्यभदाद्धविर्भेद[1] ॥

स्विष्टकृदनुमन्त्रणमुक्त प्राशन च ॥ ४ ॥ ५३ ॥ ( ४।१३ )

द । अग्नि प्राश्नाविति[2] हुतस्यानुमन्त्रण । प्राशन । उक्तमित्यनुषङ्ग । आग्रायणमुक्तमेव[3] प्राशन आह्य स्विष्टकृत्कालक भद्रान्न इति व्रीहिश्यामाकाना भक्षणे मन्त्रा । एतमु त्यमिति यवानाम् ॥

ब्र । इडामग्न इत्येव स्विष्टकृत हुत्वा । अग्निः प्राश्नावित्यनुमन्त्रण शरदि । भद्रान्न इति नान्दीमुखश्राद्धादनन्तर नवान्नप्राशन । एतमु त्यमिति ग्रीष्मे ॥

आ । स्विष्टकृदनुमन्त्रणमुक्त । अग्नि प्राश्नाविति व्रतस्यानुमन्त्रण प्राशन चोक्तम् ॥

---

वैश्वदेवस्य सिद्धस्य सर्वतोऽग्र्यस्य जुहोत्यग्नय सोमाय मित्राय वरुणायेन्द्रायेन्द्राग्निभ्या विश्वेभ्यो देवेभ्य प्रजापतये ऽनुमत्यै धान्वन्तरय वास्तोष्पतय ऽग्नय स्विष्टकृत च ॥ १ ॥

द । वैश्वदेवस्य कर्तव्यता वक्ष्याम इत्यध्याहार । विश्वेभ्यो देवेभ्य स्वाहेति वैश्वदेवसभवाच्छत्रिन्यायेन कर्मसमूहे वैश्वदेवशब्द प्रवृत्ति अथवा विश्वे च ते देवा अन्यान्यो विश्वे देवा देवता अत्रेति वैश्वदेव । अत्रापसदे ऽग्नावित्यनुवर्तत । देवाद्यावोपसन्ना भावे लौकिके ऽपि भवति सर्वत्रार्यदेश समाचारादवैश्वदेवभोजन निषेधाच्च । स्मृतिषु प्रतिदिन हि पञ्चयज्ञानुष्ठान गृहस्थविहित ।

1 Then follow the sa ne prat kas as ᵒ e by B K tl XIII 15 198 11 12 3 R आग्रायण उ ? 4 Katl l c 13 14 5 Kath l c 15 16 6 Tl u tl M of Devap la ( धन्व the V ş usm t ) the otl r M g v tl e names of the de t es abbre ated ı Th ı B (l h Mss ) and the V şnusm t LXVII 2 स्विष्टकृत इति T स्विष्टकृतय इति AC स्विष्टकृतये CD 8 Thus CD प्रतिपा न AT

पञ्च यज्ञा पुनर्वक्ष्यन्ते । देवयज्ञ [1] पितृयज्ञो भूतयज्ञो मनुष्ययज्ञो ब्रह्मयज्ञ इति । यदग्नौ जुहोत्यपि समिध तद्देवयज्ञ सतिष्ठते । यत्पितृभ्य स्वधा करोत्यद्भिस्तत्पितृयज्ञ सतिष्ठते । यद्भूतेभ्यो बलिं ददाति तद्भूतयज्ञ सतिष्ठते । यत्स्वाध्यायमधीते तद्ब्रह्मयज्ञ सतिष्ठते । यद्ब्राह्मणेभ्यो ऽन्न ददाति तन्मनुष्ययज्ञ सतिष्ठते[1] ॥ आपसदे ऽग्ना सायप्रातरपि वैश्वदेव कुर्यादिति व्याचक्षते । सिद्धस्य सर्वतो ऽग्रयस्य जुहोतीति । भोजनाद्यर्थत्वेन सिद्धस्य न तु हविष्यादेव । व्रीह्यादे अग्रस्याग्रे प्रथम जुहुयात्ततो ब्राह्मणादिक भोजयेत् । अग्रयस्येति सप्तम्यर्थे व्यत्ययेन षष्ठी । अन्ये व्याचक्षते । अग्रयस्य प्रधानव्रीह्यादेर्भूयासमश गृह्णीयादिति । अग्रयस्य ग्रहणेन दर्शित सर्वग्रहणेनोपात्तस्य पुनरग्रयग्रहणेन भूयस्त्वार्थमुपपादनात्[2] । अन्यस्मात्तु सर्वतस्ताव मात्रमुद्धत य[3] । ये त्वापसदे सायप्रातर्जागरणार्थं वश्वदेव वदन्ति त एव व्याचक्षते । सर्वस्मादगृहस्थिताद्यदग्रयमुत्कृष्ट सिद्धमप्रयासेन यवव्रीहितण्डुलादानामन्यतम तस्याशन जुहुयान्न त्वभिनिवेश कुर्यात् । अमुनवेति तर्हि होमान्दर्शयति । अग्नये स्विष्टकृत इति[4] । अग्नि परिसमूह्य पर्युक्ष्य परिस्तीर्य हविरभिघाय । नानभिघृत हविरस्तीति श्रुते । एता द्वादशाहुतीर्जुहुयात् केचिदाहु । अग्नये सोमायेति स्विष्टकृत प्रागाज्यभागान्त लक्षयतीति तच्च सायन्तिकप्रायेणान्यत्राहेष्टदर्शनात् चतुर्थीनिर्देशात्स्वाहाकारान्तात् दर्शयति स्वाहाशब्दो निपात सप्रदान द्योतयति ॥

ब्र० । सायमाशे ससिद्धे ऽन्ने[6] भूतमन्नमिति पत्न्यान्येन केनचिद्वाप्युक्ते शुचिर्भूत्वा प्रतिजपति ओमित्युच्चैस्तस्मै नमस्तन्मा क्षा इत्युपाशु ।

1 1 Tl s passaœe (now w th सतिष्ठते no v wıth ति) ı quoted but rathe ncor ectly from theK ha raṇyaka se Schroede d e Tueb ngen Katl a Handsch ften page 57 2 र्थमपपा D C 3 मुद्धत्त य AT मुद्धक्त य C मुक्तवद्धक्त य D 4 Cp note 7 oı paœe 2ı9 5 See K th XXXVI 14 80 19 6 सायमाशसमिद्धन्न the Bombay वैश्वन्व सिद्ध the Iahore Ms ı Cp Khadıra grhs I 5 18-19

अथाग्निं परिसमूह्य पर्युक्ष्य परिषिच्य चातुष्कोष्ठं स्तरं परिस्तीर्याग्रयस्यान्नस्योद्धृत्याभिघार्य द्व्यवदानमात्रा द्वादशाहुती पाणिना जुहुयात्। अग्नये स्वाहेत्युत्तरतः सोमाय स्वाहेति दक्षिणतः। तयोर्मध्ये नव तिस्रस्तिस्रः प्राचीरुत्तरार्धपूर्वार्धे स्विष्टकृत् ॥

आ । वैश्वदेवस्येतिकर्तव्यतोच्यते। सिद्धस्य भोजनार्थं न तु तादर्थ्येन साधितस्य सर्वतोऽग्रयस्य जुहोति। सर्वेषामन्नानां मिश्रापूपपायससक्तूनां यदग्रयमन्नं तस्यादनादेर्जुहोति। परिसमूह्य पर्युक्ष्य परिस्तीर्यान्नहोमवद् द्व्यवदानमात्रं अग्नये स्वाहा सोमाय स्वाहेति द्वादशभिः स्वाहाकारान्तैः परां परां जुहुयात्। केचिदग्नये सोमायेत्याज्यभागवदभितोऽग्नेः। स्विष्टकृच्चोत्तरपूर्वार्धे ॥

तक्षोपतक्षाभ्यामित्यभितः[3] ॥ २ ॥

दे । जुहोतीत्यनुषज्यते। चतुर्थीनिर्देशात्सम्प्रदानार्थीयो नमःशब्दोऽत्र सदाचाराद्गम्यते। तक्षाय नम इत्युभयस्यां दिश्यभितोऽग्नेः पूर्वं प्रदक्षिणं कृत्वा प्रथमं पूर्वोत्तरकोणे ततः पूर्वदक्षिणे ॥

ब्र । हुतशेषात्पात्रेषु दर्भेषु वावाक्षितेषु महामार्जारश्रवणप्रमाणादनूनान्यथास्थानं वाग्यतोऽमुष्मै नम इत्येवं षट्त्रिंशतं बलीन्हरेत्। पिण्डवचसा प्रतिमाप्रतिपत्तिरेकत्र चेत्कृत्स्ना भवन्तीतरेतरसंसृष्टाश्च। तक्षाय नम इत्यग्नेर्दक्षिणतः। उपतक्षाय नम इत्युत्तरतः ॥

आ० । ततो बलिहरणमुदकमवसिच्य हुतशेषात्। तक्षोपतक्षाभ्यामग्नेः पार्श्वतो विभज्य नाम्ना। तक्षाय नम उपतक्षाय नम इति चतुर्थ्या नमस्कार उपस्थापितः। सम्प्रदानार्थो ह्येषः केचिद् द्वन्द्वदेवता एका मन्यन्तेऽग्नीषोमवत्। तन्न। द्वन्द्वान्तकाम्पता अभ्य इति स्म त्युक्त। विभज्य सूत्रकारेण दर्शितम् ॥

---

1 तादर्थ्येन the Ms ) हमवद्व्यव० th M 3 इति tt d by B (and cp V ṣnusm t LXVII ) Deva ] la on ect the first two vord of th n xt sūtra w th tl on th p obably wrong Fo अभित v अभितम् p पूर्वेण n LI 2 ( f th word do not bel g to उक्त of tl preceding t a) 4 These and th f llow ng word e not lea to m

पूर्वेणाग्निमम्बा नामासीति[1] सप्त ॥ ३ ॥

दे० । पूर्वेणाग्निमित्यनुषज्यते[3] । अम्बा नामासि तस्य ते नमः । दुला नामासि तस्यै ते नमः । नितत्नी[4] नामासि तस्य ते नमः । चुपुणीका[5] नामासि तस्यै ते नम । अभ्रयन्ती नामासि तस्यै ते नमः । मेघयन्ती नामासि तस्यै ते नम । वषयन्ता नामासि तस्यै ते नमः ॥

ब्र० । पूर्वेणाग्निमम्बा नामासीति सप्त गृहदेवताभ्यो ब ्धुमत्य सप्त भरद्वसोर्वसिष्ठस्यत्याषमनुस्मृत्य ॥

आ० । पूर्वेणाग्निमम्बा नामासीति सप्त । ते अग्ने पूवस्या दिशि । अत्राप्यम्बा नामासि नमस्त इति प्रयोग ॥

गृह्याभ्यो[6] नन्दिनि सुभगे सुमङ्गलि भद्रकरीति स्रक्तिष्वभिदक्षिणम् ॥ ४ ॥

दे० । गृहेभ्यो हिता गृह्या देवता । स्रक्तिषु कोणेष्वग्नेरेताश्चतस्र आहुतीजुहुयात् । अभिदक्षिण प्रदक्षिण यथा भवति पूर्वदक्षिणकोणादारभ्य । अपरे गृहस्रक्तिष्विति ˜याचक्षते[8] । तत्र प्रचुरप्रयोगदशान शरण । नन्दिनि तुभ्य नम इत्यादि प्रयोगो ऽनुमन्तव्यः । प्रदानार्थवादाह्वानस्य ॥

ब्र० । नन्दिन्यादीशानादिकोणचतुष्टये चतस्रः ॥

आ० । ततो गृह्याभ्यो बलिहरण नन्दिनि सुभग सुमङ्गलि भद्रकरीति स्रक्तिष्वभिदक्षिण । नन्दिनि नमस्त इत्याग्नेय्या । सुभगे नमस्त इति नैऋत्या । एव प्रदक्षिण स्रक्तिषु गृहकोणेषु ॥

स्थूणाया ध्रुवाया श्रियै हिरण्यकेश्यै वनस्पतिभ्यश्चेति ॥ ५ ॥

दे० । गृह्याभ्य[9] इति यथायोग्य सर्वत्रानुवर्तनीय । ध्रुवासाति म ्त्रेण

1 Katl XI 4 13 14 1 2 B n t w tl tl t a th f st v ord of tl e t o e I I followe l D apāla and Ad tyadarsa 3 See ote 3 on page 241 4 नितन्त्री the M ( l thı al o B ) 5 चुपणिका tl e M t Devapāla चुपणीका Br C S e ote 2 ı Tl ı e ne l d गुह्यसुक्तिष्विति D गुह्यसुक्तिं त्रिति C A has blank n T tl pa age ıs mıss ng 8 Cp A l o tl lt ) गृहाभ्य D गृहेभ्य AT C ınd st nct

वास्तोष्पतीयकर्माणि दर्शितेन[1] या स्थूणा संस्कृता प्रधानभूता गृह मध्ये तस्या हिरण्यकेश्यै नमो वनस्पतिभ्यो नम इति बलिद्वयमुप हरेदिति केचित् । अन्ये तु यथासख्य व्यभिचार मन्यमाना स्थूणायामधिकरणभूताया वनस्पतिभ्यो जुहुयात् । ध्रुवाया स्थाल्या हिरण्यकेश्य नम इति व्याचक्षते । स्थूणाया हि वनस्पतिर्देवता वसति स्था याच हिरण्यकेशी लक्ष्मी । गृहदेवताना चामी होमा ॥

ब्र । श्रिय हिरण्यकेश्य नम वनस्पतिभ्यो नम इति बलिद्वय मध्यमस्थूणायाम् ॥

आ० । स्थूणाया ध्रुवाया मध्यमाया श्रिय हिरण्यकेश्य वनस्पतिभ्यश्चेति ॥

धर्माधर्मयोर्द्वार मृत्यव च ॥ ६ ॥

 । धमाय नम । अधमाय नम इति गृहद्वारमध्ये आहुती जुहुयात् ॥

ब्र । धमायाधमाय मृत्यवे इति बलित्रय द्वारे ॥

उदधाने वरुणाय ॥ ७ ॥

 । मृत्यवे नम इति जलपात्र धमान्के जुहुयात् । उदकस्य उदसञ्ज्ञायामित्यु ानश द उद वत् ॥

ब्र । वरुणायेति मणिकसमीपे ॥

आ । उदधाने घगादो वरुणायेति ॥

विष्णव इत्युलूखले ॥ ८ ॥

 । वरुणाय नमो विष्णवे नम इति पिपिप्यधिकरण बलिद्वयमुपहरेत् ॥

मरुद्भ्य इति दृषादि ॥ ९ ॥

ब्र । मरुद्भ्य इति पेषण्याम् ॥

आ० । दृषदि पेषणशिलायाम् ॥

1 (p XI 2. ) Th M स्थूणायां हि वनस्पति ध्रुवायां ेवता वसति । 3 D vap la n ct मृत्यव च tl tl t tra (मृत्यव चोदधाने)' 4 D vap l omb ne वरुणाय th l next s t a (वरुणाय विष्णव इत्युलूखल)' (p t 4 ( उदधानश D C, उदधामशि० AT Cp ote 4 8 Mai nal note n AT पिपिषी पषणभाण्डम्' Th tia 1 g ith ts bha ya n Devap la

उपरि शरणे वैश्रवणाय राज्ञे भूतेभ्यश्चेति ॥ १० ॥

दे० । वैश्रवणाय राज्ञे नमो भूतेभ्यो नम इति गृहस्योपरि बलिमुपहरेत् ॥

ब्र० । वैश्रवणादिबलिद्वय गृहस्योपरि ॥

इन्द्रायेन्द्रपुरुषेभ्य इति पूर्वार्धे ॥ ११ ॥

दे० । पूर्वार्धे गृहस्याग्नेवा ॥

ब्र० । इन्द्रायेति बलिद्वय गृहस्य पूर्वार्धे ॥

आ० । गृहस्यैव ॥

यमाय यमपुरुषेभ्य इति दक्षिणार्धे ॥ १२ ॥

वरुणाय वरुणपुरुषेभ्य इति पश्चार्धे ॥ १३ ॥

सोमाय सोमपुरुषेभ्य इत्युत्तरार्धे ॥ १४ ॥

ब्र०[3] । वरुणाय सानुगाय पश्चार्धे सोमायोत्तरतश्चान्यगृहेषु स्मृतिषु च श्रूयते । लौगाक्षिस्तु तथा नाह । प्रायणायादौ सोमस्य याग पश्चार्धे दृष्ट । प्रतीची दिक् सोमो देवतेत्यग्न्युपस्थाने श्रूयते । वरुणायेति द्वयमुत्तरार्धे ॥

आ० । यमाय यमपुरुषेभ्य इति दक्षिणार्धे । एवमादि । स्पष्टमन्यत् । सोम पश्चिमायामस्माक दृश्यते । प्रतीची दिक् सोमो देवता । तथा प्रायणाये सोम पश्चादिज्यते ॥

ब्रह्मणे ब्रह्मपुरुषेभ्य इति मध्य ॥ १५ ॥

---

1 Here and n the next s t a D vap l nsert ft each dat ve नम (नमो)। 2 Here s a d ffic ılty as B nd a lueb ngen fragment of Br read सामाय सोमपुरुषभ्य इति पश्चार्धे। वरुणाय वरुणपुरुषभ्य इत्युत्तराध th text of D ap l gree w th V s usm t LXVII 17 18 (Cp M n orh II 19 14 15) Could Br have altered h s t xt o to l n g t into harmony w th the passages of the K thal c ted by l m ? F om Ad noth ng defin te to l g e l H een to po nt out only that th text of tl e G hya t a l scordance w th the K thaka 3 Relat o to the la t t t a 4 K th VII 9 64 15 5 Kat XXIII 8 83 18

**ऊर्ध्वमाकाशाय ॥ १६ ॥**

द । आकाशाय नम इत्यूर्ध्वं बलिमुपहरेत् ॥

ब्र । आकाशाय नम इत्यूर्ध्वं पश्यन् ॥

आ । ऊर्ध्वां दिशमुत्क्षिपेदाकाशायेति ॥

**स्थण्डिले दिवाचरेभ्यो भूतेभ्य इति दिवा ॥ १७ ॥**

दे । शुचिभूभागे[1] दिवा बलिमुपहरेत् ॥

ब्र । दिवाचरेभ्य इति भूमौ दिवा वैश्वदेवे ॥

आ । स्थण्डिले भूमौ दिवाचरेभ्यो भूतेभ्य इति दिवा बलिं[2] हरेत् ॥

**नक्तचरेभ्यो भूतेभ्य इति नक्तम् ॥ १८ ॥**

दे । स्थण्डिल इत्यनुषज्यते । अत्र दिवा वैश्वदेवे क्रियमाणे बलिमुपहरेद्रात्रौ तु नक्तचरेभ्यो भूतेभ्य इति केचिद्व्याचक्षते । प्रयोगस्त्वीदृशः । दिवापि वैश्वदेवं कुर्वाणाः कल्पयित्वा नक्तचरेभ्यो भूतेभ्योऽपि स्थापयन्ति । रात्रौ च त्याजयन्ति । रात्रौ तु वैश्वदेवो नोषितस्तत्रावश्यकर्तव्यः क्रियमाणस्य किंचिद्विकल्पमभ्युपगतमेव एकान्तपराजयद्वारं संदेह इति नयेन ॥

ब्र । नक्तचरेभ्य इति सायं । इति षट्त्रिंशद्बलयः ॥

आ । यदा नक्तं रात्रौ नक्तचरेभ्यो भूतेभ्य इति ॥

**शेषं पितृभ्यः पिण्डान्निदधाति[4] ॥ १९ ॥**

द० । शिष्यत इति शेषः प्रदर्शिताहुतिबलिभ्यो मुच्यमानः । तं पिण्डीकृत्य पितृपितामहप्रपितामहेभ्यो मातृपितामहीप्रपितामहीभ्यश्च ददाति ॥

आ० । शेषं बलिहरणशिष्टं पितृभ्यः पिण्डान्विन्धाति पिण्डपितृयज्ञवत् । निदधातीति प्रकृतिलिङ्गात् । सतिलमिति केचित् । सघृतमन्ना

---

1 Befo e th s wo d D ha शुचिया ( tl l t tl l t ak a a n bl — शुचिभू DC F l l बलि न्रा th M Th g f ls ll tl M l प्रदधाति AT R निन्न nst a l f वि l l tl P d l t vajna f tl e Ka a Alt l Ah lt l a l

जुहोति सोदक बलिषु सतिल पितृषु ॥

उदकलशमुपनिधाय स्वस्त्ययन वाचयति ॥२०॥२४॥ (४।१४)

दे० । अग्नेरागमनश्च समीपे जलकलश स्थापयित्वा स्वस्त्ययन वक्ति बोधश्च मेत्यनुवाक । वाचयतीति स्वार्थे णिच् रामो राज्यमकारय दित्यादिवत् । चारादिको वात्र वाचि । स्वस्त्यविनाश इयत प्राप्यते येन त स्वस्त्ययन । अत एव पुरुषसूक्तकानिक्रदत्प्रभृति वक्तव्यम् ॥

ब्रा० । तत उदकपूर्णं कलशमुपनिधाय तत्र वरुण यज्ञपुरुष विष्णु चा भ्यर्च्य बोधश्च मेति स्वस्त्ययन । साय शिरोगतोरेण मयूरव स्व स्त्ययनोपस्थान । नृपाभिषेकेषु चेति प्रातिशाख्येषु दृष्टत्वात्स्वस्त्य यनस्य सर्वत्रोह्य प्रयोग । तत परिस्तरणानि नीत्वाग्निं विमुच्येत् ॥

आ० । तत उदकलशमुपनिधायाग्निवरुणप्रत्यक्ष स्वस्त्ययन वाचयति बोधश्च मेत्यनुवाक । अत्र स्वार्थे णिच् ॥

## इति लौगाक्षिसूत्रे गृह्यपञ्चिकाया चतुर्थोऽध्याय ॥

---

## अथार्तवस्वस्त्ययनानि ॥ १ ॥

दे० । अथत्यानन्तर्ये । ऋतावृता भवान्यार्तवानि कर्माणि वक्तव्यानि । स्वस्ति मङ्गल्य । तदविनाश ईयत प्राप्यत यस्तानि स्वस्त्ययनानि । तानि कानिचित्राक्षत्यान्यपि श्रावण्यादीनि । तषामकरण कालचोदि तानामित पाथिकृता भवति । कपोतनिलयशान्त्यादीनि स्वस्त्य यनान्यव ॥

1 I tl XXXVII 10 ) (p D ıp la n IV 1 11 P kta c ta l tl l t Katl a \ k l o p b blv tl a tl tl K k al t kt l l c p l t RS II 4) 1 43 ) RS Kl la II ) 1— a l RS II 43 3 4 ? 1 ho e ead गतारण । Tl lo 1 l n the Boml av M इति यजुषि काठकचरकशाखाया ला गृह्य च अ (I abl reviat ) ı tl I ahore M इति काठके यज्ञसूत्रे गृह्य पञ्चिकाया च अ । ( पथि th Mss ( Tl th onl l l ct D o ly शान्तादीन tl othe M

आ । ऋतावृतौभवान्यार्तवानि कर्माणि स्वस्तिरीयते यै तानि स्वस्त्ययनानि कानिचित्संस्कारत्वान्नित्यान्यप्यष्टकादीनि । कानिचित्स्वस्त्ययनानि अन्येन[1] यथा कपोतनिलयाश्वयुज्यादीनि । कानिचिदुभयरूपाणि यथा श्रावण्याग्रहायणी चत्रे च स्वस्त्ययनानामकरणनादृष्टदोष[2] । अत्र कालचादितानामेवातिपत्ता पाथिकृती ॥

श्रावण्या चत्वारि हवींष्यासादयेदपूप स्थालीपाक धाना सक्तूनुभयमक्षतानाम् ॥ २ ॥

द । चतस्र पौर्णमास्य श्रावणी आश्वयुजी आग्रहायणी फाल्गुनी । श्रवणेन युक्ता पौर्णमासी श्रावणी । तस्या चत्वारि हवींष्यावापस्थाने निरुप्यासादयेदपूपादीनि । तत्रापूपो व्रीहिमयो घृतपक्व यवमयस्तैलपक्व फाल्गुन्या तैलपक्वस्य[3] जुहोतीति लिङ्गात् । चतुर्ष्वपि मातृवर्णिन्य । अपूपे विष्णु । चरौ रात्र्य[4] । धानासु सक्तुषु च सर्पा । उभय धाना सक्तवश्चाक्षतानामनवहतानां यवानाम् ॥

द । श्रावणस्य शुक्लपञ्चदश्या चत्वारि हवींष्यासादयेत् । विष्णवे जुष्ट निवपामीति व्राहाणामपूपार्थं निवाप । रात्र्ये जुष्टमिति स्थालीपाकार्थं सर्पेभ्यो जुष्टमिति द्विधाना सक्त्वर्थं यवाना भृष्ट्वैतान् या न्सक्त्वर्थं पिनष्टि । हविषामुदगुद्वासनाद्यन्यवायिना कार्यं । अलंकरणकाले सपवित्रे पात्रे धाना उपवपति सक्तूंश्च ॥

आ० । श्रवणेन युक्ता पौर्णमासी श्रावणी । विनापि श्रवणेन । तस्या चत्वारि हवींष्यासादयेत् । कानि । अपूप स्थालीपाक धाना सक्तूंश्च । एतद्धानासक्त्वाख्यमुभयमक्षताना यवानामनवहताना । चरुमिति वक्तव्य स्थालीपाकग्रहण पाकयज्ञतन्त्रनिवृत्त्यर्थं । सर्वत्र पाकयज्ञशब्दसामान्यात् ॥

वषट् ते विष्णु इत्यपूपस्य जुहोति रात्री व्यख्यदिति स्थालीपाकस्य नमो अस्तु सर्पेभ्य इति धानाना ये वाद इति सक्तूनाम् ॥३॥

---

1 ? नैमित्तिकानि । 2 U ta स्वस्त्ययननामकरण tl M 3 R तैलापूपस्य ? Cp IXX 1 4 Pl tl M R रात्री ?

दे० । आज्यभागान्त पूर्वा मध्याश्चावदाय[1] प्रधानानुष्ठान सर्वं जुहोति नमोदित स्वाहाकार । म त्रचतुष्टयस्य प्रतीकेनापूपादिहोमेषु विनियोगोऽनेन भणित ॥

ब्र० । आज्यभागान्ते यथोक्ताभिश्चतसृभिवषट् ते विष्ण इत्याद्याभि प्रधानम् ॥

आ० । रात्रा न्यरयदिति स्थालीपाकस्य । अवदाय मेक्षणेन । एव मादाना चतुरवत्त पञ्चावत्त वा स्रुचा होम । मध्यपूर्वाधावदान दर्श पूर्णमासप्रकृतित्वादागच्छति । यत्र यत्र जुहोतिशब्दस्तत्र तत्र स्वाहाकार ॥

येषु वा यातुधाना इति दर्व्यावटेषु सक्तूनाम् ॥ ४ ॥

दे० । अवटेषु गर्तेषु । दर्व्या न तु स्रुचा । येषु वेति म त्रेण होम । अभिघार सवत्र श्रुत्या नानभिघृत हविरस्तीति ॥

ब्र० । य वाद इति सक्तूनामग्ना हुत्वा दर्वीं स्रुग्वत्सम्मृज्य बर्हिषि निधा येपस्ताय तेषामेव सक्तूनामवदानधर्मेणावदायाभिघाय सक्तू प्रत्यभिघाय येषु वा यातुधाना इत्युदगग्नेरवटे जुहोति । नावट परिस्तरणमनग्ना अपरिस्तीर्ण इति हि परिभाषा । ऋतुतिथियागान्ति त त्रसमाप्त ॥

आ० । दर्व्या न स्रुचा । अवटे गर्त नाग्ना । अविद्यमानेऽवटे खा त्वा प्यवटे जुहोति ॥

उभयत्राखुराजाय बलि हरेदाद्यन्तयोर्वा ॥ ५ ॥५५॥ (५ । १)

दे० । उभयत्रेति । आपसदहोमेऽवटहोमे च । अन्ये त्वाहु । उभयत्र सायप्रातर्होमकालो लक्ष्यते । यदुक्त दिवाचरेभ्यो भूतेभ्यो दिवा नक्तचरेभ्यो नक्तमिति वैश्वदेवबलिहरण । तत्र स्थाने सक्तुबलिर नेनोच्यते । चातुर्मासिका गृह्यान्तरे तथादर्शनात् । सावित्रेण देवस्य

1 ०वधाय th M ) ? Tl ACT नादित D
11 Dev p l l tl t xt of B l and th Bl \ t B n to po nt to the gul (अवट) b t p l ) B o I \ 4 4 Befor उभयत्र० the M of D p l l v सक्तूना h l n ay be a repetition of the last wo l ot tl p l o t a See LIV 17 18

°वेत्यादिनाखुराजाय बलिं हरामात्यन्तेनष बल्युपहार । आद्यन्त योर्वेति । श्रावणफाल्गुन्योरिति केचित् । आद्यन्तयोहविषोरपूप सक्तुलक्षणयोराखुराजाय बलिं हरेदिति व ये ॥

ब्र । श्रावण्यामेव पाकयज्ञेनेष्ट्वा तूष्णीमुपचरिता सक्तून्दर्वीं च स्था ल्या विहायसि शिक्ये निदध्यात् । तदह प्रभृति मासचतुष्टय त सक्तुभिर्दर्वीं पूरयित्वा साय प्रातश्च देवस्येत्यादिनाखुराजाय बलि मुपहरामात्युदगग्नेरवटे बलिमुपहरेच्छावण्याग्रहायण्योरेव परि सख्यया[1] श्रावण्या साय विशत्यधिक बलिशतमेकाकृतमुपहरेत् । आग्रहायण्या प्रातर्यद्यधिमासो मासचतुष्टयमध्ये भवत्तदा परि सख्यया पञ्चाशदधिक शत । उभयत्रापि । नात्रोपस्तरणाभिघारणे होमाभावात् ॥

आ० । उभयत्राखुराजाय बलि हरेत् । सक्तूना द यैत्यनुवर्तते । क । उभयत्र । दधिसक्तुबलिहरणसामर्थ्याच्छाखान्तरीय सायप्रात काले चातुर्मासिक बलिहरण वक्ष्यते[3] । तेनोभयत्र साय प्रातरग्नि होत्रेण्वताभ्य इत्यत सूत्रात् । आद्यन्तयावा श्रावण्याग्रहायण्यो । एत चतुर्णां मासामाद्यन्ते पाणमास्या ॥

---

आयूतिके कपोते भयार्ते सक्तुषु भस्मनि वा पद दृष्ट्वा देव कपोत इत्यष्टर्चेन स्थालीपाकस्य जुहोति ॥ १ ॥

दे । प्रायेण वर्षासु कपोता प्रोद्भवन्तीति श्रावणाप्रसङ्गेन कपोतनि लयशान्तिरुदिता । यूति सङ्ग । तत्प्रतिषेधेनायूति सङ्गवियोगो ऽभिप्रेतः । अयूतौ भव आयूतिक । सदा यः सङ्गचारी कपोत सदैवात् श्येनादिनावागूर्य नियोजितो भीतो यदा गृह प्रविशति तदेय शान्तिरुच्यते । न तु केवलचारिणि दृष्ट निर्भयगृहदेवकुला दिनिवासिनि ग्रामकपोते तादृशे आयूतिक कपोत गृहसबद्ध भयार्त दृष्ट्वा गृहपति स्थालीपाकस्य जुहुयाद्देव कपोत इत्याद्यष्टा

---

1 परिसख्यायावा the Lahor Ms Th h le p age far f om lear to me 2 Om n the M f L ho 3 I am nable to po nt out th t xt h e r f el to 4 Cp Append x VI 5 Thus C लान्विासिनि T A लान्निर्वासिनि D

भिऋग्भि । यदा स्वरूपेण कपोत न पश्यति किं तर्हि । गृहा भ्य तरे[1] भस्मनि सक्तुषु वा कपोतचरणप्रतिबिम्बमवलोकयति तदा जुहुयात् । यमदूतो हि कपोत । त प्रत्यक्षेणानुमानेन वा कृत सनिधान गृहे बुद्ध्वा महतो रिष्टस्य शान्तय इद स्वस्त्ययन कुर्यात् । क्वचिदायूतिक सुस्पष्ट ॥

ब्र० । कपोतगृहप्रवेशसूचितदुरिष्टशान्त्या देवेभ्यो जुष्ट निवपामाति चरु निर्वापः । देव कपोत इत्यष्टाभिरग्निऋषिरिति पावमान्य ताभि प्रधानम् ॥

आ० । आयूतिके कपोते । यूति सङ्ग । तद्विपरीतः अयूति । अयूता भव आयूतिक । असहाय इत्यथ । असहायके कपोते श्येनादिना त्रासिते गृहे निलान सति वक्ष्यमाणा शान्ति कर्त या । यत्ते गृह कपाता वलभीषु सर्वदा वसन्ति ते यातिका भयाताश्चन तेष्विय शान्ति । अदृष्टेषु सक्तुषु भस्मनि वा कपोतपद दृष्ट्वा तथापाय कत या । मृ युदूते हि कपोते निलान सवत्राग्निदग्धपदानि दृश्यन्त यत्रापि नोपविष्ट ॥

परीमे गामनेषतेति गा परिणयन्ति ॥ २ ॥

दे० । परिणय तीति बहुवचनेन गृहपति यतिरिक्तस्या यस्याप्यत्र कर्तृत्व दशयति । अत्रपीष्टिविकार वादाज्यभागा त कृ वा स्थालापाकहोम ॥

ब्र० । यस्मिन्गृहे कपोतपद दृष्ट त गा परिणयन्ति ॥

आ० । परिणयन्ति यत्र निलानो गृहे तत्रानेन म त्रण ॥

सा दक्षिणा ॥ ३ ॥ ५६ ॥ (५। २)

ब्र० । ता होमान्ते ब्राह्मणाय दद्यात् ॥

आ० । सैव कतुर्दक्षिणा । प्रायेण कपोता वषासु सचरन्त्यतो ऽस्मिन्न वसरे उक्ताः ॥

---

आश्वयुज्यामश्वा महयन्ति सर्वाणि च वाहनानि ॥ १ ॥

1 गृहा तरे D C 2 Hes tat n°ly emended अभया तश्चन the M 3 Th s ve se nı t l a e follo ved m ned atel after the Kapotas kta t correspon ls with Rs X 1505

न। अश्वयुजा नक्षत्रेण युक्ता पौणमासी आश्वयुजी। तस्यां नृपति प्रभृतानामश्वप्रभृतानामश्वादिस्वस्त्ययनमिदं कर्तव्यमुच्यते। अश्वान्महयन्ति पूजयन्ति स्नानानुलेपनालंकारप्रभृतिभिः शृङ्गारयन्ति। सर्वाणि च करिकरभतुरगप्रभृतानि वाहनानि यथासंभवं महयन्ति॥

ब्र। अश्वरथादिवाहनवतामाश्वयुक्पौर्णमास्यामश्वादीनां नवविचित्रवस्त्रालंकारैश्चन्दनालक्तकसिन्दूरादिस्थासकैश्च पूजयेत्॥

आ। अश्वयुग्भ्यां युक्ता पौणमासी अश्वयुजा[1] युक्ता वा आश्वयुजी। तत्राश्ववतां नीराजनं स्वस्त्ययनमश्वानामुच्यते। अश्वान्महयन्ति पूजयन्ति। वस्त्रालंकारैश्चन्दनादिस्थासकैश्च। सर्वाणि च वाहनानि। हस्त्यश्वतरमाहिषखरोष्ट्रादीनि च॥

उत्तरतो ग्रामस्य वेद्याकृतिं कृत्वा शाखाभिः परिवार्याहतैश्च वासोभिः सर्वरसैर्घटान्पूरयित्वा दिक्षु निदध्यात्सर्वबीजैश्च पात्राण्यवान्तरदिक्षु ॥ २ ॥

दे०। ग्रामस्य या उत्तरा दिक् तत्राग्निविकारत्वादिष्टिवेदिसदृशीं चतुरश्रां वेदिं कृत्वा तां च शाखाभिरहतैश्च वासोभिः परिवार्य सर्वरसैर्मधुरादिभिरिक्षुरसप्रभृतिभिर्घटान्पूरयित्वा[3] विदिक्षु पूर्वोत्तरादिषु न्यध्यात्[4] ॥

आ०। उत्तरतो ग्रामस्येति व्याख्यातं। अहतैश्च वासोभिः परिवार्य सर्वरसैर्घटान्पूरयित्वा लवणमधुघृतादिभिर्दिक्षु निदध्याद्वेद्याः। सर्वबीजैश्च तिलयवादिभिः पात्राणि पूरयित्वा अवान्तरस्रक्तिषु निदध्यात्॥

तमपरेण यथोक्तमुपसमाधाय जयप्रभृतिभिर्हुत्वा तिस्रो देवता यजेत वरुणमग्निमश्विनावाश्वयुजौ[6] च ॥ ३ ॥

---

1 The two aksharas युजा supplied by me. 2 श्वरथ the Mss. 3 Thus (क्षु) the Mss. 4 न्ध्यात् the Mss. 5 See Ad. on LII. 5. 6 Here again a real discrepancy between Devapāla on the one and Br. and Ād. on the other side; the last two omit अग्निम्- श्विना आश्वयु Br.

दे० । तस्य च रचितोपचारस्यापरभागे यथोक्तमाज्यभागान्त हुत्वा जय प्रभृतिभिश्च राष्ट्रभृदन्तहुत्वा तिस्रो देवता यजेत नामधेयेन तद्देव तया वचा । कास्तास्तिस्र । अग्नि वरुणमश्विनाविति । आश्वयुजी चतुर्थी । ता तु नामधेयेनव आश्वयुन्य स्वाहेति तल्लिङ्गमन्त्रा भावात् । आज्यमत्र हवि ॥

ब्र० । वेदि यथोक्तवत्कृत्वा तस्या प्रधानदेवता अभ्यचयेत् । आज्य हविरत्र । आज्यभागान्त । वरुणाय स्वाहा । अश्विभ्या स्वाहा । आश्वयुज्य स्वाहा । इति तिस्र प्रधानाहुतयः । ऋग्भिर्वैतद्देवताभि [1]॥

आ । तमपरण । तमेवविज्ञ दशमपरेण । यथोक्तमुपसमाधाय जय प्रभृतिभिर्हुत्वा तिस्रो देवता यजति । हविषो ऽनपदेशादाज्येन । वरुणमश्विनावाश्वयुजी च । चशब्दादाश्वयुजी नामधेयेन ऋचो ऽभावात् ॥

इज्यमाने ऽश्वा याजयन्ति सर्वाणि च वाहनानि ॥ ४ ॥

दे० । यागे क्रियमाणे ऽश्वादीन्योजयन्ति पयाणाल्कारादिना ॥

ब्र० । इज्यमाने ऽश्वादिवाहनानि वाहका योजयन्ति ॥

आ० । चतुर्गृहीतेन इज्यमाने ऽश्वान्योजयन्ति पयाणदानादिना । सर्वाणि च वाहनानि च योजयन्ति ॥

प्रदक्षिण दवयजन कवचिन त्रि परियन्ति ॥ ५ ॥

दे० । देवयजन यागस्थान वेदि तस्या [4] परिहितकवचा करितुरग प्रभृतयः प्रदक्षिण भ्रमणत्रय कुर्वन्ति ॥

आ० । ते ऽश्वारूढा कवचिन प्रदक्षिण देवयजन त्रीन्वारान्परिगच्छन्ति ॥

---

1 Tle e e to b u e l a g ven by B K tl XVII 1) 9(3 1) 90 (Va na) XVII 18 262 10 11 (A v ) an l to A ay 1 tl e o espon l no a to t fi t part w tl T B III 1 1 1? पृथ्वा सुवचा युवति सजाषा चित्रभानु रुदगान्छोभमाना । धननास्मान्द्रजया यायन्ती ( s c ) पाणमासा सुभगा वेतु हव्यम् ॥ Tl e er not l own f om any Sai l ta 2 M ino n all tl e cop e of Devapala 3 कमांचित्र tl e M of Devapala but cp l Bhava 4 S c M s'

प्रहर्षान्कुर्वन्ति ॥ ६ ॥

द । प्रहृष्टाः स तो घातादिक कुवन्ति ॥

आ । प्रहषान्[1] कोशा कुवन्ति ॥

इष्ट यथार्थ सप्रयान्ति ॥ ७ ॥

द । इष्टे यागनिवृत्ते सति यथाथ यथासप्रयाजन सयक् प्रहृष्टा यान्ति या यत्राधिकृत स त स्थानविशेषमनुसरतीत्यथ ॥

गावास कसो हिरण्य च दाक्षिणा ॥ ८ ॥

द । समस्त च गवादि दक्षिणा ॥

ब्र । यथोक्ता होमकत्व दक्षिणा ॥

आ । गा हिरण्य च दक्षिणा कत्व ॥

रसा बाजानि वासासि ॥ ९ ॥ ५७ ॥ ( ५ । ३ )

दे । दक्षिणेत्यनुष यते । रसा ये घ षु क पिता बाजानि पात्रेषु वासासि च वादिवरणानि । तानि सवाण्यव दक्षिणा । उपयुक्ताना दक्षिणया प्रतिपत्ति कत येत्यथ ॥

आ । रसा बाजानि वासासि चान्येभ्यो यागविभागात् ॥

---

दे । अस्यामेवाश्वयुज्या गामता स्वस्त्ययनमाह ॥

अथ गामता विधि ॥ १ ॥

दे । उपसृष्टा गावो वसन्ताति लिङ्गात्सवमेत कम गोस्वामिनामुपदिश्यते ॥

आ । गोमतामि मुच्यते । गवा स्वस्त्ययनमेतत् । तस्मिन्नेवाहनि समागतासु तास्वेतत्साय कायम् ॥

इह प्रजा यासामूध [6] पृषदश्वा घृतप्रताक इति पृषातकस्य

1 प्रहषानु the M　2 Of th　t a B　I \ I /
10 t ace　3 यथार्थो all th　M　4 S　I \ III (
Not n o　printed K tl　k　t xt इह प्रजा विश्वरूपा रम तामस्मिन्गोष्ठे विश्वभृता जनित्री । अभि कुलायमभिसवसाना अस्मा अव तु पयसा घृतन ॥
6 Ident al v tl Ap　VII 1. 1 (o ly ता नाऽव तु　tea l of ता न सन्तु)

जुहाति ॥ २ ॥

द० । पृषातक पृषदाज्य । त पुनदधिमिश्रितमाज्य । अतश्च सानाय्य धर्मक । आज्यभागा त चोपसमाधान कृत्वा विष्णोमनसेति पवित्र कृत्वा । अग्नेजिह्वाति पृषातकमुपूय प्र ानयागो ऽय कर्त य । म त्रवर्णिकाश्च देवता । म त्रास्त्विह प्रजा इत्यादिभि प्रता कश्च वारो विनियुक्ताः । तश्चतुभिश्चतस्र आहुतय ॥

ब्र० । गोमता पृषातकेन प्रधानयाग । गोभ्यो लवणदान । द ि घृत मिश्र पृषातकमित्याचक्षते । हविरासादनकाले तूष्णी दध्युपूय शाते भस्म य ि श्रित्याज्यधान्या घृतमासिच्य चरुवदभिघायासा दयति । आज्यभागान्ते चतस्र प्र ानाहुतय ॥

आ० । घृतपयसी पृषातक । तस्य जुहोति ॥

अम्भ स्थेति लवणमभिम य गोभ्यो दद्यात् ॥ ३ ॥

दे० । इत्यभिम याहुतिचतुष्यादन तर गोभ्यो दद्यात् ॥

ब्र० । अम्भ स्थेति सहस्रपोष व पुषेयमित्यन्तन यथाशक्ति गोभ्यो लवण दद्यात् ॥

रौद्रीभिरभिजुहुयान्नित्याभिश्च ॥ ४ ॥

दे० । मृडा नो रुद्रेति चतसृभि राद्रीभिजुहुयात् । नित्याभिश्च । जुहु यादित्यनुषङ्ग । नित्या परा ऋच इह गावो ऽय यज्ञ आ न प्रजा मिति तिस्र एव स्मय ते ॥

ब्र० । तता मृडा नो रुद्रति तिसृभि स्रुवेणाज्येनाभिहोम । इह गावो ऽय यज्ञ आ न प्रजामित नित्याभिश्च । तत ऋतुतिथियागादि त त्रसमाप्ति ॥

आ० । नित्याभिश्च नित्यदाम्नाता सवप्र ानानामिह गावो ऽय यज्ञ आ न प्रजामिति लिङ्गात्तिस्र एव । अन्यासा व्यपदेशान्तरमास्ति । धुर उपधुर अष्टच चेति । तस्मात्ता न भवन्ति ॥

---

1 The ver e K th XL 11 145 15-146 4 are meant ee Bı Devap la n h s Mant abhasya expla ns only the e three ² Cp XLVII 13

दधिक्राव्ण इति पृषातकस्य प्राश्नाति ॥ ५ ॥

दे । दधिक्राव्ण इति मन्त्रेण पृषातकस्य शेषं प्राश्नाति ॥

ब्र । इति हुतशेषस्य पृषातकस्य प्राशनम् ॥

आ । दधिक्राव्ण इति पृषातकस्य संस्थिते कर्मणि प्राश्नाति ॥

उपसृष्टा गावो वसन्ति ॥ ६ ॥ ५८ ॥ (५ । ४)

द । वत्सयुक्ता गावस्तां रात्रिं वसन्ति ॥

ब्र । तदहः सवत्सा गावो वसन्ति ॥

आ । उपसृष्टा वत्सगावो वसन्ति । एतदपि सायंकरणं लिङ्गं । यावदुक्तो ऽयं होमः ॥

---

अथ वृषोत्सर्गः ॥ १ ॥

दे । अथशब्दो ऽधिकारार्थः । अथार्तवस्वस्त्ययनमध्ये ऽपि वृषोत्सर्गो ऽधिकृतो ऽनन्तरं बोद्धव्य इत्यर्थः ॥

आ । अथशब्द आर्तवस्वस्त्ययनपृथक्करणार्थः । गोप्रसङ्गेन कालप्रसङ्गेन चोच्यते वृषोत्सर्गः । गवां वृष उत्सृज्यते तेन वृषोत्सर्गः । सदा ह्यमायव पितॄणां सहोपकारायेति स्मर्यते । एष्टव्या बहवः पुत्रा यद्येको ऽपि गयां व्रजेत् । यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्[3] । स्वगोष्ठे वोत्सृजेत् ॥

कार्त्तिक्यां पौर्णमास्यां रेवत्यां वाश्वयुज्यस्य गवां मध्ये सुषमिद्धमग्निं कृत्वा पौष्णं चरुं पयसि श्रपयित्वा पूषा गा अन्वेतु न इति पौष्णस्य जुहोति ॥ २ ॥

दे० । कृत्तिकायुक्तश्चन्द्रो यस्यां भवति सा कार्त्तिकी पौर्णमासी । तस्यामाश्वयुज्यस्य वा संबन्धिनि रेवतीनक्षत्रे कर्मेदं कर्तव्यमिति कालविकल्पः । कथं कर्तव्यमित्याह । गवां मध्ये स्वगोष्ठे समिद्धं दीप्तमग्निं कृत्वा पूषदेवताकं चरुं पयसि श्रपयित्वा । आदित्यप्रायणाय चरुविकारः । पूषा गा अन्वेतु न इति पौष्णस्यावदानद्वयमुद्धृत्य

---

1 The sutra portion not given in the C ... of Devapāla  2 प्राश्नाति T A C प्राश्नति D प्राशाति A1  3 V...nusm... t 8o 6...

जुहुयात् ॥

ब्र० । पूषा पिष्टभागिति श्रुतिनिर्दशनात् अत्र पाष्ण पिष्टशालिमयश्चरु ॥

इह रडिरिति हुत्वा ॥ ३ ॥

दे० । इह राडिरित्याद्या दशाहुतीर्जुहुयात् प्रधानानन्तरम् ॥

ब्र० । इह रटिरिति स्रुवेण दशाहुतीर्जुहोति । इह रडि स्वाहा ॥ १ ॥ इह रति स्वाहा ॥ २ ॥ इह धृति स्वाहा ॥ ३ ॥ इह विधृति स्वाहा ॥ ४ ॥ इह स्वधृतिः स्वाहा ॥ ५ ॥ इह रन्ति स्वाहा ॥ ६ ॥ इह रम स्वाहा ॥ ७ ॥ इह रमता स्वाहा ॥ ८ ॥ इत्यष्टा स्वाहा कारान्ताः । अग्ने वेद् ॥ ९ ॥ स्वाहा वट् ॥ १० ॥ इति यथापठिताभ्यामेव । नात्र स्वाहाकार ॥

आ० । इह रडिरित्याज्यस्य जुहोति प्रतिमन्त्र दशाहुती ॥

रुद्राञ्जपित्वा ॥ ४ ॥

दे० । ततो रुद्राभिधानान् षडनुवाकाञ्जपेत् ॥

ब्र० । ततो नमस्ते रुद्र मन्यव इति षडनुवाकान् । सहस्रशीर्षेति षोडशर्चं पुरुषसूक्त[4] । यद्वा देवहेडन यददीव्यननृणमहम् आयुस्ते विश्वतो दधद् वश्वानराय प्रतिवेदयाम इति सूक्त चतुष्टय । कूष्माण्डानि च जपेत्[6] ॥

जाववत्साया पयस्विन्या पुत्रमेकरूप द्विरूप वा यो वा यूथ

1 I am unable to po nt ut the source of tl rut quotat ı cp Gop br II 1 2 ( पिष्टभाजन ) 2 Cp XXVI 10 a l Br on our tra 3 K th XVII 11—16 4 F ım g part of the Kath ra yaka ee Schroeder Zwe Haı l hr le K K B bl othek p ge 9 The puru as kta a cord ı g to tl e Rgved ns cons sts of 16 accord ng to the Katha of many more ve ses 5 All ın the Katha ra y aka ee Scl oe ler d e T ıebınger Katha Handschr ften pag 68 ı0 ı? ıo 6 These vords oı ght to p ecede the pa age यन्वा देवहेडन the e anuv kas are prec sely the K mand n (oı K m )

छादयेद्यूथे च तेजस्वितमः स्यात्तमलङ्कृत्य चतस्रोऽष्टौ वा वत्सतर्यस्ताश्चालङ्कृत्येत युवानं पतिं वो ददाम्यनेन क्रीडन्तीश्चरथ प्रियेण । मा हास्महि प्रजया मा तनूभिर्मा रधाम द्विषते सोम राजन्निति ॥ ५ ॥

दे० । अतिशयप्रत्ययार्थ आरम्भ उत्सृजेदित्यपेक्षया द्वितीया । ततोऽपि एकरूपं द्विरूपं वा एकरूपेति तस्माद्रोहितरूपाः[1] पशवो भूयिष्ठा इति श्रुतत्वात् रोहितवर्णं बह्वृचे चोक्तं । द्विहायनमेकहायनं वा नीलं बभ्रुं कपिलं चेति । द्विरूपत्वेऽपि बभ्रुः सप्तशुक्लैश्च्युद्रकश्चित्रितः पुराणे चोक्तः । यो वा यूथं गोगणं छादयेत् । सर्वत्रोन्नत इत्यर्थः । यो वा यूथे तेजस्वितमः शायकान्त्यादियुक्तः । तमलङ्कृत्य वस्त्रमालाघण्टादिना । चतस्रोऽष्टौ वा वत्सतर्य इति विकल्पः । वत्सतर्योऽक्षतयुवत्यो दुहितरश्चतुर्वर्षाः । ता अपि पूर्ववदलङ्कृत्येत मित्यादिमन्त्रेण ॥

ब्रा० । जपादनन्तरमयस्कारो वृषभमङ्कयेत् । शूलेन दक्षिणं पार्श्वं वामं चक्रेण । वामं पार्श्वं शूलेन दक्षिणं चक्रेणेति विष्णुस्मृतिदर्शनात् । अङ्कितं हिरण्यवर्णा इति चतसृभिरापो हि ष्ठेति तिसृभिः शं नो देवीरिति चाद्भिरकेवलाभिव(?)त्सतरयश्च स्नापयित्वा गन्धमाल्यादर्शकिङ्किनासावर्णश्रृङ्गराप्यखुरमुक्तालाङ्गूलपट्टवस्त्रादिभिः सवत्सतरीकमलङ्कुर्यात् ॥

आ० । यो वा यूथं प्रच्छादयेत् उच्चत्वेन । यूथे च तेजस्वितमः स्यात् वार्यवत्तमो गवां समूहे । तमलङ्कृत्य समाचाराच्चक्रशूलाङ्कितं च कृत्वा चतस्रोऽष्टौ वा वत्सतर्यस्त्रिहायनास्ताश्चालङ्कृत्यानुमन्त्रयेत ॥

तस्य दक्षिणे कर्णे पिता वत्सानामिति जपित्वोत्सृज्य प्राचीं

---

1 रूपा the M... K... XXIV 2 ... 3 ... Sankh gṛhy s III 11 10 but perhaps the follo... g ... t... l f o... a Bal v... cab... hm... a ... 4 ... m t 8 10

It is difficult to reconstruct the ... of the ... A ... above given in the text De... ep... la... ept that l... la

मुदीचीं वा दिश प्रकालयित्वा सह वत्सतरीभि सर्पिष्मदन्न ब्राह्मणान्भोजयेत् ॥ ६ ॥ ५९ ॥ (५।५)

दे० । तस्य वृषस्य दक्षिणे श्रोत्रे पिता वत्सानामिति जपेत् । मन्त्रालिङ्गा दयमेव त्यागमन्त्र[1] । उत्सर्गसकल्प निवर्त्य वत्सतरीभिः सह प्राचीमुदीचीं वा दिश प्रकाल्येत् नयत् । तत सर्पिषा भूयसा युक्त हविष्यमन्न नाना प्रकार ब्राह्मणान्यथाशक्ति भोजयेत् ॥

ब्र० । प्रागुदीची दिश प्रकालयेत् । तत ऋतुतिथियागादितन्त्रसमाप्ति । शोभन वसनयुग्म घृतपूरित कास्यपात्र रुक्म च यथाशक्ति होम कर्त्रे दद्यादयस्कार च तोषयेत् । बहु सर्पिष्मदन्न सदक्षिण विप्रेभ्या दद्यात् ॥

---

द० । स्वस्त्ययनानन्तरमाह ॥

आग्रहायण्यामेतान्येव चत्वारि हवींष्यासादयेद्यानि श्रावण्या यवमयस्त्वपूप ॥ १ ॥

दे० । अग्र हायनो ऽस्य अग्रहायणी । अग्रे वा हायनो ऽस्या अग्रहायणी । हायन सवत्सर । तस्याग्रे आरम्भे वा यस्या अग्रे पुरो हायनः सा आग्रहायणी । अग्रे हायनो ऽस्य आग्रहायणी[4] । सा तु मार्गशीर्षस्य पौर्णमासी । सवत्सरस्याग्रे । तस्या सवत्सरा ऽग्रे चैत्रामावस्याया ह्यारभ्य तदन्त एव ज्योति शास्त्रे सवत्सर प्रसिद्धश्चैत्रादिमासयुक्त इत्यादिव्यवहारात् । रूढत्वे दूरविप्रकर्षणे योगो ऽप्यस्तीति निर्वचन । पौर्णमास्यश्चतस्र स्वस्त्ययनस्योक्ताः । श्रावण्याश्वयुज्याग्रहायणी चैत्री चेति । तत्राग्रहायण्या चैत्र्या

---

जपेत् nstead of जपित्वा In Br e read तस्य दक्षिणे कर्णे पिता (then the whole mant a) योत्सज इत्यषभमुत्स य । the Mant a s identical w th K th XIII 9 191 18 as to the first t o p das then follows रेतोधा वा यशोधा रायस्पोषाया सजे ॥

1 Thu A यमेवेयागममन्त्र D C 2 Both the cop of Br leave the words यानि श्रावण्या out 3 Thus A अग्रहायणी D C and first hand of D आग्रायणी 4 Thus D अग्र A आग्रायणी C and first hand of D 5 Thus the Mss

सवत्सर पुर सा वा तस्य पूर्वा । तत्रता येव चत्वारि हवीष्या सादयेद्यानि श्रावण्यामुक्तानि[1] । विशेषमाह यवमयस्त्वपूप । अपूपो ऽत्र यवमयः स्थालीपाकस्तु व्रीहिमय इति शेष । एव चात्र त्रयो यवमया सपन्ना अपूपा ानाा सक्तव इति ॥

ब्र । मार्गशीर्षमासपार्णमास्यामाग्रहायणी । तस्या प्रातराखुराजाय बलिं समाप्य श्रावणावदेव चत्वारि हवींषि । यवमयस्त्वपूप ॥

आ । आग्रहायणमस्या सा आग्रहायणी पौणमासी । तस्या तान्येव चत्वारि हवीष्यासादयेद्यानि श्रावण्या । यवमयो ऽपूप इति विशेषः । वरुण वात् ॥

एवा वन्दस्वेत्यपूपस्य जुहोति ॥ २ ॥

दे । एवा वन्दस्वे यादिना म त्रेणापूपस्यावदानद्वय जुहोति ॥

ब्र । आज्यभागान्त एवा वन्दस्वेति यवापूपस्य जुहोति ॥

उप ते गा इति स्थालीपाकस्य ॥ ३ ॥

दे० । गताथम् ॥

ब्र । उप ते गा इवेति रात्रिदेवतस्य चरो ॥

उक्त धानासक्तूनाम् ॥ ४ ॥

दे० । धानासक्तूना यत्कम तदुक्तमेव श्रावण्या । तथव कतव्यता । नास्ति तत्र विशेष ॥

ब्र । नमो अस्तु सर्पेभ्य इति धानाना ये वाद इति सक्तूना येषु वा यातु धाना इति दर्व्यावन्वेषु सक्तूनाम्[2] ॥

अव ते हेड इति वारुणीभिरभिजुहुयान्नित्याभिश्च त्वामग्न वृषभ चकितान सवत्सरस्य प्रतिमामिति च ॥ ५ ॥

दे० । नित्याभिश्च । जुहुयादित्यनुषङ्ग । एता अपि । इह गाव इत्या द्यास्तिस्र । नित्याभिर्हुत्वा त्वामग्ने इति द्वाभ्या जुहोति ॥

ब्र० । तत स्रुवेणाग्रावाज्याहुता । अव ते हेड उदुत्तम तत्त्वा यामीति तिस्र । त्वामग्ने वृषभ सवत्सरस्य प्रतिमामिति द्वे । एवमग्रे ॥

उदग्दशमास्तरणमास्तीर्य शिरस्त उदक निधाय व्रीहियवाना

1 Cp LV 2.   2 Cp LV 3 4   3 Cp XLVII 13

प्यापाहिष्ठायाभि शय्यामभ्युक्ष्य त्रातारमिन्द्रमिति शमीशाखया शय्यां निमार्ष्टि ॥ ६ ॥

दे । उदीच्यां दिशि दशा यस्य भवति तादृशमास्तरणं पत्न्यादिकमास्ताय भूमिशय्यायां प्रस्ताय यत्र शिरस्तत्रोदकं निधाय तत्र च व्रीहियवान्प्रक्षिप्य शय्यामापोहिष्ठायाभिस्तिसृभिरभ्युक्ष्य त्रातारमिन्द्रमिति शमीशाखया शय्यां निमार्ष्टि शोधयति ॥

ब्रा । अस्मिन्दिने स्वापकाले चोदग्दशं स्तरणमास्तार्येत्यादिविधिना सविशेत् ॥

आ० । यत्र हेमन्ते शयितुमास्तीर्णं प्रस्तरे तत्रोदग्दशमास्तरणं प्रच्छादनमास्ताय यत्र शिरस्तत्रोदकं सनिधाय तत्र च व्रीहियवान्प्रक्षिप्य त्रातारमिन्द्रमिति तां निमार्ष्टि शोधयति शमीशाखया ॥

ऐन्द्राग्नं वर्मेत्यहतं वासः परिधाय स्योना पृथिवीति दक्षिणेन पार्श्वेण संविशति ज्योतिष्मतीत्यन्तेन ॥ ७ ॥

दे० । ऐन्द्राग्नं वर्मेत्यादिना मन्त्रेणानुपभुक्तं हेमन्तयोग्यं वासः परिधाय विशति शय्यां दक्षिणेन पार्श्वेन । सर्वानुवाकनिवृत्त्यर्थं ज्योतिष्मत्यन्तग्रहणम् ॥

आ । ऐन्द्राग्नं वर्मेत्यनयाहतं वासो हेमन्तं प्रावरणं परिधाय प्रवृत्य स्योना पृथिवीति दक्षिणेन पार्श्वेन संविशति शय्यायां । ज्योतिष्मतीत्यन्तेन । आद्यन्तग्रहणमनुवाकशेषो मा विज्ञायि[6] ॥

अभ्युक्षणादिसंवेशनान्तमेव द्विरुत्तरम् ॥ ८ ॥

दे० । उत्तरं द्विः कर्म कर्तव्य । किं तत् । अभ्युक्षणादिविशत्येव । एवशब्दो ऽन्तवचन[9] संवशनमित्यर्थः ॥

---

1 यवानुप्य Br यवा वा tl M of De ap la Cl XV 2 निमा B a l of tl e M of De p la C 3 निमा D C 4 Conjecturally emended शयतन्यामायित यस्व स्तीर्णे the Ms 5 B अधोवास ( अधीवास ? ) 6 विज्ञाय the M 7 अभ्युक्षणान्सिविश यव (!) tl M of D ap la 8 Sc' 9 Thu A C T न्तवचन D 10 सवशन ot g e ly D C

अ । एवमुत्तर कम द्वि कुयादभ्युक्षणादिसवशेना तम् ॥

च यामुद्राहणमुपरिशय्या नात्र स्थालीपाको न शाखया निर्माष्टि[1] ॥ ९ ॥ ६ ॥ ( २ । ६ )

न । एवशब्द सब धनाय । एवमेव च या पाणमास्या कर्म कर्तव्य यथाग्रहायण्यामुक्त । एतावास्तु विशेष । अत्रोपरिशय्या । अभूमा खटवायामित्यथः । अस्मादेवाग्रहायण्या भूमाशय्या गम्यत । अत एवोद्राहण । ऊर्ध्वरोहन आरोहण । अत एवोद्रोहणमित्य वथ ना मास्य कमण इष्ट । अयमपरो विशेष । नात्र स्थालीपाक । नापि शमाशाखया निमाजन । परिशिष्ट तु सकलमाग्रहायण्या तुल्यम् ॥

ब्र । च या यवमयो ऽपूपो धाना सक्तव इति त्रीणि हवीषि । नात्र रात्रिदेवतश्चरु । आग्रहायणावन्वेषा यागो ऽभहोमश्च । तथव च शयीत नात्र त्रातारमिन्द्रमिति शमाशाखया निमार्जयेत् ॥

आ । एतदव च या कर्मोद्रोहणाख्य । तत्र विशेष । उपरिश या खट्वाया । इह तु भूमा । स्थालीपाको न भवति शाखामार्जन च । स्योना पृथिवीति शयनमुपरिशयने ऽपि भवति यस्मात्पृथिव्या अनुम त्रणमेत पृथिवी च सवषामाधार । अहत वासा ऽत्राशु सूक्ष्मतर निवातकालीन । उद्रोहण ऊर्ध्वरोहण । उपरि वातायनाद्या शयनमिति ॥

---

तिस्रो ऽष्टका पितृदवत्या ॥ १ ॥

दे । तत्राष्टकाशब्द कमसमुदायनाम राजसूयादिवत् । एकैकस्या च कमत्रय प्रतीयते । स्थालीपाककर्मैक प्रधान । आवाहनादिसत पितब्राह्मणानुव्रजनपयन्त द्वितीय । आन्वष्टक तृतीय । आज्यभागा न्ता त्वितिकत यता । स्थालीपाकादातिथ्यक तु पश्चात् ॥

आ । अष्टका इति कमनाम धेय । कर्मत्रयमष्टकाशब्देनाच्यत । होम श्राद्धमन्वष्टक्य च । ताश्च पितृदेवत्या । श्राद्धप्रधाना इत्यथ ।

---

1 निमा B an l of the M s of De ap la ( D 2
3 देवता Br दैवत्या th M s of Devar la l th Tal M of B 4 R अन्वष्टक्य 5 Tl D c l l a l
स्थालीपाकात्तु पश्चात् the othe M

अथवा पशुपक्षे देवताभिधानं वपाच्छेदनादौ पितृभ्यस्त्वा जुष्टमव कृन्तामीति ॥

ऊर्ध्वमाग्रहायण्यास्त्रयस्तामिस्रास्तेष्वष्टमीष्वष्टकायज्ञा ॥ २ ॥

दे० । एवमाग्रहायण्या ऊर्ध्वं ये त्रय कृष्णपक्षा पौषमाघफाल्गुनाख्या । तेषु या अष्टम्यस्ता अष्टकायज्ञा कर्तव्या ॥

आ० । ऊर्ध्वमाग्रहायण्यास्त्रयो ये तामिस्राः पक्षास्तेषु पक्षेषु या अष्टम्य स्तास्वष्टमीष्वष्टकायज्ञा कर्तव्या । अष्टकायै यज्ञा अष्टकायज्ञा ॥

प्रथमा शाकेन द्वितीया मांसेन तृतीयामपूपै ॥ ३ ॥

दे० । कुर्यादिति शेष । हविष्यान्ननिवृत्ति । आज्यभागान्ते च पवित्र शाकाद्य[1] चतुरावत्तेन होतव्यमष्टकायै स्वाहेति ॥

ब्र० । अक्षोटफलमिश्रं तु मिश्रं लाजा च माक्षिकै ।
शाकसंज्ञमिति प्रोक्तं प्रथममष्टकाविधौ ॥

आ० । शाकव्यञ्जनमन्वाहार्यं इति वचनाच्छाकादयो ऽन्वाहार्या । न तैर्होम । एवं पूर्वस्मिन्पक्षे आज्यभागान्त हुत्वा अष्टकायै स्वाहेति शाकादीनां होम । तत स्थालीपाकहोम ॥

ऋतूना पत्नीति षड् द्वे द्वे स्थालीपाकस्य जुहोति ॥ ४ ॥

दे० । ऋतूना पत्नीत्यादयः षडृचो ऽनुवाकशेषभूताः । ताभ्यो निष्कृष्य द्वे द्वे ऋचा प्रत्येकं स्थालीपाकस्य जुहुयादाज्यभागान्ते ॥

आ० । तत ऋतूना पत्नीति षडृच अनुवाकशेष । तासां द्वे द्वे स्थाली पाकहोमे तिसृणामष्टकानां नियुक्ते ॥

देवा ग्रावाण इति[2] सर्वत्र तृतीया ॥ ५ ॥

दे० । देवा ग्रावाण इत्यादिका यथा सर्वास्वष्टकासु भवति तन तृतीय यमृग्भवति । ततश्चैकैकत्र तिस्रस्तिस्रो भवन्ति ॥

---

1 ? Thus the secon l hand of D पवित्रशाकादश्चतु the other Mss 2 Thı verse unt l now not found ın any text of the Kaṭhas ag ees w th A III 10 5 only देवा ग्रावाणो at the beginnıng whereas the last pada runs (as ın Man g hs II 8 3 b) ज्योग्जीवेम बलिहृतो वय ते । The Kaṭha recens on moreover has परिवत्सरीयम् as the Man gṛhs

इयमवेत्यनुवाकेन पञ्चभि पञ्चभिरभिजुहुयात् ॥६॥६१॥(५।७)

दे । स्थालापाकेनेष्ट्वा इयमेवे यादिनानुवाकेन जुहुयात् । किं सकलन सवत्रे याह । पञ्चभि पञ्चभि । इयमेवेत्यादिना पञ्चभिः प्रथमाष्ट कायामभिजुहुयात् । पञ्च युष्णारिति मध्यमाया । ऋतस्य धामेति तृतायाया । अभिश द उपरिवचन । हविषामुपरि जुहुयाद् यर्थे । आ येनता आहुतय । अत ऊर्ध्वमृतुतिथ्यादिकम्[1] ॥

ब्र । आग्रहायण्या ऊर्ध्वमृतूना प यृतस्य धाम देवा ग्रावाण इति तिसृभि प्र ग्रानानीयमवति पञ्चभिः स्रवेणा येनाभिहाम । तथ्या ऊर्ध्व कृष्णाष्टम्यामेकाष्टकानानुजामनुजा देवा ग्रावाण इति तिसृभि प्रधान पञ्च व्युष्टेरिति पञ्चभिरभिहोम । माघ्या ऊर्ध्वे कृष्णाष्टम्या मभू नु नः प्रथमा ह देवा ग्रावाण इति तिसृभि स्थालापाकस्य हाम ऋतस्य धामेति पञ्चभिरभिहोम ॥

गवा चेदष्टका स्यात्पशुना वा तदुक्तम् ॥ १ ॥

दे । चेच्छब्दो यद्यर्थे । स्थालापाकन गवा वा छागेन वाष्टका भवति । यदा गवा तदा स्थालापाकस्थानेऽपि गास्त्यक्त्या पितृुद्देशेन ब्राह्मणाय दात येत्यथ । यदा तु छागेन तन्नातिदेशमाह तदुक्त मिति । आदावेव पशुक प इत्युक्त । तदेव त त्रमिह ज्ञेयमित्यथ । एतावास्त्विह विशेष । पितृभ्यस्त्वा जुष्टमवकृन्तामीति वपावकर्तन कर्त यमिति ॥

ब्र० । यदि गवा पशुना वाष्टका स्यादष्टकाचरुहोम पञ्चकाभिरभिहो मश्च निवतते । अय द्वितीयो ऽष्टकायज्ञक प । पूर्वेण तु सहास्य विकल्प । पशुत त्र तु पूवमुक्त । विशेषान्वक्ष्याम । प्राचानावीती दक्षिणाभिमुख पितृकर्म कुयात् । ऋतस्य वे यत्र पितृभ्या जुष्ट मिति पितृभ्यो भाग सुवित इति[3] प्रायश्चित्तहोमे । पितृभ्यस्त्वा जुष्टमवकृन्तामीति वपामवकृन्तति ॥

---

1 Emended अत ऊ र्ध्वमातिथ्यान्कि कर्म the Mss 2 See Kandika LI 3 See Br on K LI page 164 note 6

वह वपामिति वपा जुहुयात् ॥ २ ॥

दे० । वह वपा जातवेद इत्यादिना वपा जुहुया प्राचीनावीती दक्षिणामुख ॥

पश्यो ऽवदानस्थाने ऽङ्गारिणी कुर्यात् ॥ ३ ॥

दे० । दाघमासलता पेश्य । ता अवदानस्थानेभ्य उद्धृत्याङ्गारिणी कुयात् । अङ्गारेषु पचेन्न स्था यामित्यथ ॥

ब्र० । ाघमासपेशीरु धृत्यावदानस्थानेभ्यो ऽङ्गारेषु श्रपयेत् ॥

यथाकाम मज्जुका ॥ ४ ॥

दे० । मज्जुका[4] वपानिमितो यूषः । यथाकाम यथा सपद्यते तथा कार्येत्यथ[6] । सा च स्था यामेव पक्तु शस्यते ॥

ब्र० । यथाकाम तु यूषाथम य मास स्था या श्रपयेत् ॥

आ । यथाकाम म जुका यूष । त स्थाल्या श्रपण भवति नाङ्गारेषु ॥

य समाना इति द्वाभ्या स्थालापाकस्य पेशीना च जुहोति ॥५॥

े० । ये समाना इति द्वाभ्या स्थालापाकेन पेशीभिश्च यथासख्य जुहुयात् । ये समानाः समनस पितर इति स्थालापाकस्य ये समाना समनसो जीवा इति पेशानाम् ॥

ब्र० । ये समाना इति पशुचरुप्र ानहोम ॥

स्विष्टकृद्धर्मेण वहान्न वह मास जातवेद पितृभ्य इति जुहुयात् ॥ ६ ॥ ६२ ॥ (५।८)

---

1 Tl e Ma tra quote l p obably from the Kathayajna tra ns वह वपा जातव पितृभ्या यत्रना वेथ निहिता पराक । मदस कु या उप ता स्रव तु स या एषामाशिष स तु कामै Cp Vaj Sa l XXXV 20 (K nva Re e on) 2 Thus Br an l Ad l ut the M s of D vap la पशारवन्गन । 3 Uncerta n Br ın hı contınuou text म जुका of the Mss of Dev D g e क TC a l first han l of D र जुक A broken off 4 oका D TC A a d D fi t ha l oका । 5 यूप the M ( Tl u (po t ng to a fem s ng) DTC कार्य इत्यर्थ A 7 च mıs g Bı aı d Ad 8 Varıa ts of tle Mantra gıven uıder s t a 2

ब्र । वहान्नं जातवेद इति स्थालीपाकात्स्विष्टकृदिति वह मांसमिति न्य ङ्गात्स्विष्टकृदिति । ऋतुतिथ्यादिकं पूर्ववत् ॥

ब्र । वनस्पतिमिष्ट्वतुतिथियागादि[1] च प्राक् स्विष्टकृत पितृभ्यो बलि मुपहृत्य तद्देवताश्च मन्त्राञ्जप्त्वा वह मांसमिति स्विष्टकृद्धोम । समिदाधानान्तं तुल्यमन्यत् । कलौ गोवधनिषेधादजः पशुरेव ॥ इति विशेषाष्टका ॥

आ० । स्विष्टकृद्धर्मेण स्विष्टकृत्काले वहान्नमिति स्थालीपाकात् वह मांसमिति न्यङ्गात् । इडामग्न इति निवृत्ता । हुतशिष्टं मांसं श्राद्धे । इह गृह्ये यत्र यत्र गोवधस्तत्र तत्र कल्पित पशु अन्यन्मांसं वा दृश्यते न गोवधो लोकसंक्रुष्टत्वादनुष्ठेयं मांसं लौकिकमपि भवति । अनुपाकृतं मांसं गोरेव प्रतिषिद्धं नाजस्य मेषस्य वा । तथा च हारीत । ग्राम्यपशूनामश्वत्यजस्यावेः उपाकृतस्य च गोः । तेनानुपाकृतमांसानीति गोविषयमेव ॥

---

दे० । अष्टकायज्ञादूर्ध्वं श्राद्धमाह ॥

हविरर्हानुपवेश्य ॥ १ ॥

दे । हविः स्वधा श्राद्धभोजनमर्हन्ति ते हविरर्हा । स्मृत्युक्ता वेदवि दादयः पतितादिवर्जा । प्रकृतकर्मयोग्या । तानुपवेश्य वैश्वदेवे द्वौ प्राङ्मुखौ पित्र्ये त्रीनुदङ्मुखानास्तीर्णदर्भासनेषु ॥

आ० । श्राद्धं प्रस्तौति । होमं द्विप्रकारं विकल्पने सर्वास्विष्टकासु हुत्वा । हविर्येऽर्हन्ति हविषः श्राद्धं तत्र ये योग्या तानुपवेश्य ॥

पितॄनावाहयिष्यामीत्युक्त्वा ॥ २ ॥

दे० । ततः पितॄनावाहयिष्यामीति ब्राह्मणेभ्योऽनुज्ञामर्थयते । पितृग्रह णप्राधान्यात् । तेनादौ विश्वेदेवानामावाहनादि कार्यम् ॥

आ० । एवमुपवेश्य पितॄनावाहयिष्यामीति च तान्पृच्छति ॥

अपयन्त्वसुरा इति द्वाभ्यां तिलैः सर्वतोऽवकीर्य ॥ ३ ॥

---

1 ०मिष्ट्यन्तुतिo the Ms 2 गौरव the Ms 3 नाजन th Ms 4 The Mantras of the ldha ch pter er containe l n two Anuv kas (Cp LXIII 20) wh ch probably formed part of the last Mantra adhy ya Se on th m Appen lix VII

द० । तत आवाहयेति पङ्क्तिपावनरनुज्ञात पूव वश्वदेवविषये अग यन्त्वसुरा इति द्वाभ्या यवस्तिलार्थे कुर्वीत वश्वदेवे न सशय इति परिशिष्टानुसारेण सर्वतो यवविकिरणेनासुरावकाशापसार कृत्वो मासश्श्रवणाधृत इति विश्वा देवानावाहयेत् । आवाहनमाह्वान । अनन्तर पित्र्ये ऽपयन्त्वसुरा इ याभ्यामेव तिलाना सर्वदिक्कोणविकिरणेनासुरावकाशमपास्य ॥

आ० । आवाहयेति तरनुज्ञात । अपयन्त्वसुरा इति द्वाभ्या तिल सवतः श्राद्धभूमिं विकीर्यावाहयति ॥

एत पितर आगच्छत पितर आ मे यन्त्वन्तर्दधे पर्वतरिति जपित्वा ॥ ४ ॥

दे० । पितॄनावाहयेदेत पितर इत्यादिभिश्चतुर्भि । एत म त्रजप एत्र ह्यावाहनम् ॥

आ० । जप एवावाहनम् ॥

यास्तिष्ठन्त्यमृता वाग्य मे मातेत्ययुग्भ्य पाद्यमानीय ॥५॥

दे० । ततो यास्तिष्ठन्तीति पञ्चभिः पाद्य पादार्थमुदक ब्राह्मणसख्यया प्रतिपात्रमानयेत् । केभ्य । अयुग्भ्यो ब्राह्मणेभ्य । अयुग्मरूपेण ये त्रय स्थिता पित्र्ये तदर्थमित्यर्थः । प्रदर्शनार्थ चतत् । तेन युग्भ्यामपि वश्वदेवाभ्यामर्घ्यपाद्यानयनम् ॥

आ० । अयुग्ग्रहणेन च ज्ञायते युजो ऽपि सन्तीति । यथा याज्ञवल्क्य ।[3] द्वे युग्मान्यथाशक्ति पित्र्ये ऽयुग्मास्तथव च । तेनववि गेनेति कर्तव्यता । बर्हिष्म स्वासनेषु प्राङ्मुखान्युग्मान्विश्वेभ्यो देवेभ्य उपवेश्य । अयुग्मान्पितृभ्य उदङ्मुखान् । वश्वदेवे विश्वदेवानावाहयिष्यामीति तदनुज्ञातः ओमासश्श्रवणाधृत इत्याहूय यवरन्ववकीर्य सयवमुदक पाद्यमर्घ्य च दत्त्वा । अस्माकमपि परिशिष्टे षूक्त । यवास्तिलार्थ कुर्वीत वेश्वदेवे न सशय इत्येतत्सूत्रकृता

1 Tl e tra proper l as d appea ed from the Mss of Devap la 2 Accord ng to the Prayogas the follo v ıng five a e nteı ded यास्तिष्ठन्ति अमृता वाक य न्म माता यन्मे पितामही यन्मे प्रपितामही । 3 1 227

अयुग्भ्य इत्यनेन श देन दर्शित । त्रिषु पात्रेषु पाद्यमानीय यन्मे मातेति पूर्वस्मि पात्रे य मे पितामहाति द्वितीये य म प्रपितामहीति तृतीयस्मिन् । केचिद्ब्राह्मणदर्शनात्तस्मात्पात्रेकस्याप प्रदीयन्त इति[1] यथा कुर्वन्ति । नतत्सूत्रकारेणोक्त । न च तथा दृशोन्क[1] भवति ॥ आनातेन पाद्येन ब्राह्मणा स्वय पा ावनेनिजते मधुप र्कवत् ॥

उदकानि चानयदेताभिरेव ॥ ६ ॥

दे० । आनाय ब्राह्मणपात्रेषु सिञ्चेत् दक्षिण पादमिति द्वाभ्या । तत एताभिरेव पञ्चभिऋग्भिरुदकान्यानयेत् । उदकानाति बहुवचना ल्लिङ्गा पात्रभेदेनोदकमानयेदिह त साहचर्या पाद्य ऽप्येव । उदकानि त्वघाहा पुष्पतिलसुग ाद्र याविता आप ॥

आ० । उदकानि ग ोदकतिलयुक्तानि साघ ा यघ्याथ । उदकानाति बहुवचना पात्रभेद । ततोऽनुलेपनपुष्पधूपदापप्रदानम् ॥

आदित्या रुद्रा वसव इत्येता समीक्ष्य ॥ ७ ॥

दे० । अघ्यदानानन्तर ब्राह्मणा समक्ष वा वाक्षते ॥

आ० । आदित्यादिबुद्धि ब्राह्मणषु कुर्यादित्यथ ॥

अग्नौ करवाणीत्युक्त्वा ॥ ८ ॥

दे० । ततो ऽग्ना करवाणीति ब्राह्मणा पृच्छति ॥

अग्नि परिस्तीर्य सोमाय पितृमत स्वधा नमा ऽग्नय कव्यवाहनाय स्वधा नम इत्यग्नौ हुत्वा ॥ ९ ॥

दे० । कुर्वित्यनुज्ञातो दक्षिणाग्रदर्भै परिस्तीय दक्षिणाभिमुख प्राचीना वाता सोमाय अग्नये स्व ा नम इति प्रधानान्तनाग्नावाहुतिद्वय जुहुयात् । पुनरग्निग्रहण पिण्डपितृयज्ञवदभूमा प्रक्षेपो मा विज्ञायि ॥

आ० । पुनरग्निग्रहण दवाग्निनिवृ यर्थम् ॥

ये मामका पितर एतद्व पितरा ऽय यज्ञ इति तिसृभि कल्पि

1 See the first Ka d k of the ldl l l a a V sl en Meded der Kon Ak v W t I A n ter lom Afd Lett 5e R 4e deil page 4 ) 2 Cp XXIV 10

तान्नमभिमृशति ॥ १० ॥

दे० । तदनन्तरमेतद्व इत्यादिभिस्तिसृभिः कल्पित पात्र एकोद्धृतमनेक देशमभिमृशेत् । तत स्तोक स्तोक पात्रेषु दद्यात् । अन्ये तु पात्रेषु दत्तमिति मन्त्रलिङ्गात्पात्रेषु परिशिष्टस्याभिमर्शनमाहुः । यदि पात्र शब्देन भोजनधारा उच्यन्ते अथापि ब्राह्मणा उभयथातीतपरि वेशनक्रियमनुप्रतायते पूर्वव्याख्यानेऽपि पात्रे देय हविरिति लिङ्गमाहु ॥

आ० । कश्चित्पात्रेषु दत्तममृत स्वधावदिति लिङ्गात्पात्रषु दत्तमभिमृशे दित्याहु । नैव । पात्रे देय हविरद्यमग्नेरित्यस्मादपि ब्राह्मणानामत्र पात्रशब्दः ॥

एषा व ऊर्गामासु पक्वमिति[1] क्षीर घृत वासिच्य ॥ ११ ॥

दे० । क्षीर घृत वा वकल्पिक विसृष्टे ऽन्ने आसिञ्चेत् । अन्ये तु वाशब्द समुच्चयार्थं वणयन्ति । तेनषा व ऊर्गिति क्षारमासिञ्चदामासु पक्व मिति घृत मन्त्रलिङ्गात् । वकल्पिकस्तु पक्षो रून्तर । पक्वशब्दा ऽपि क्षारेऽपि हि युज्यते । तेन मन्त्रलिङ्गस्य विशिष्टम् ॥

आ० । विकल्प । न यथासङ्ख्य । न समुच्चयः । समुच्चये सत्यामासु पक्व मिति क्षीरप्रकाशिका घृतमस्याथम्[2] ॥

अमुष्मे स्वधा नमो ऽमुष्मै स्वधा नम इति यथालिङ्गमनुमन्त्य भोजयेत् ॥ १२ ॥

दे० । अमुष्मा इति सामाननिर्देशेन विशेषो लक्ष्यते । तेन पितृपिता महप्रपितामहनामानि चतुर्थ्यन्तानि प्रतायन्ते सगोत्रसप्रवराणि । कठाय काश्यपगोत्राय पञ्चप्रवराय देवदत्ताय स्वधा नम इत्यादीनि भोजयेत् ॥

आ० । अमुष्म स्वधा नम इति त्रिरुच्चारणादेकवचनाच्च पितृनाम्ना पि तामहनाम्ना प्रपितामहनाम्ना चानुनिर्देश कतव्यः । यथा । देव दत्ताय स्वधा नम । यज्ञदत्ताय स्वधा नम । विष्णुमित्राय स्वधा नम इति च । एव यथालिङ्गमामन्त्र्य भोजयेत् ॥

---

1 The Mss of Devapāla and the Laho copy of Br (ot the Bombay copy) insert च 2 R ad ng d st nct R perhaps घृतस्यार्थम् ।

प्राश्न तु भव त इत्युक्त्वा य मे प्रकामादिति भुञ्जानान्समाक्ष्या हारात्त्रयेद्व क्रव्यात्स्वधा वहध्वमिति चताभि ॥ १३ ॥

द । य मे प्रकामादित्यनेन यद्व क यादित्यादिभिस्त्रिभिर्भुञ्जानान्समीक्षत समकृत्वा ऋगपेक्षया त्वताभिरिति निर्देश ॥

आ । अनुजानाया प्राश्न तु भव त इत्यनेन । तता य मे प्रकामादिति चतुभिम त्रभुञ्जानान यवहरतः प्रश्नते । अस्मिन्नवसरे स्वाध्याय श्रावयेपि ये ब्रह्मोद्याश्च कथा कुर्यादिति ॥

प्रथिवी दर्विरिति निपरण कुर्यात् ॥ १४ ॥

द । पृथिवा दर्विरित्यादिभस्त्रिभिस्त्रा पिण्डा पितृपितामहप्रपितामहाना दक्षिणाग्रदर्भेषु क पयेत् पूजयेच्च यथाचारम् ॥

आ । तत [3] पृथिवा दाविरिति पिण्डानिर्वपण कुयात् भुक्ताशिष्टद्न्नाद्व स यञ्जनात् यस्मादन्नाकरण कृत प्रधानभूता दनादे सतिलात्त । पृथिवा दविरिति त्रिभि पित्रे पितामहाय प्रपितामहाय । असा श इस्थान नामग्रहण । गोत्रशङ्का न कचित्कायानभि ानात् ।

य ऽत्र पितर प्रेता इति वासासि निदध्यात् ॥ १५ ॥

दे० । ये ऽत्र पितर इत्यादिना पिण्डानामुपरि वासास्याच्छादनानि दद्यात् । तानि तु कपासत तुरूपाणि रूढानि ॥

आ० । वासासि निदध्याद्युगप त्राणि[3] वीरान्न पितरो यत्तत्य तेन । वासासि सूत्रत तव ऊणास्तूका वा कापासा वा ॥

ऊर्जं वह तीरित्यप परिषिच्य ॥ १६ ॥

द० । पिण्डषु परिषिञ्चेत् । ता अपि म त्रलिङ्गादन्नस्यन्दिना कुयात् ॥

मा मे क्षेष्ठेति[6] सतृणमन्नमभ्युक्ष्य ॥ १७ ॥

दे० । तत सवाण्यन्नानि सदर्भेषु जलेनाभ्युक्ष्य मा मे नष्ठेति सर्वा

1 The words प्राश्न तु उक्त्वा not B ( t l t tl Bombay Ms ) but they seem to belo g to tl t t ı tl Mantra n Appendix VII 2 Thus of th M (D vapal ACT and first hand of D निवपण D second l l Br पिण्ड निपरण a Tueb ngen Ms g ves also निपरण । 3 तथा tl Ms 4 The Mss of Devap la न्यात् । निदध्या th M 6 Thus or क्षेष्ठेति क्षिष्टेति the M r । क्षेप्ठा इति ।

भ्युक्षण त्वन्नमन्नमिति मन्त्रगताद्वाप्सनिर्देशाद्गम्यते ॥

आ० । अभ्युक्ष्य निरवशेष मन्त्रलिङ्गात् । ब्रह्माणो मे जुषन्तामन्नमन्न मिति वाप्सासाकल्यलिङ्गम् ॥

विषदमन्नमानीय[1] कच्चित्सपन्न भो इत्युक्त्वा तृप्यन्तु भवन्त इत्युक्त्वा ॥ १८ ॥

दे० । विषद निमल सोदकप्रभृतिसकल लेशमुदधृत पात्रे समानाय कच्चित्सपन्न भोरिति वदेत् । ततः सपन्न ब्राह्मणरुक्त शेषमन्न च प्रश्नस्योत्तरे इष्टभ्य इति च भणिते ये अग्निदग्धा ये जीवा इत्यनेन दक्षिणाग्रास्ताणदर्भोपरि सर्वसिद्धे जले ऽञ्जलिना दक्षिणामुखेन प्राचीनावातिना प्रक्षिप्ते सति अनन्तर तृप्यन्तु भवन्त पितर इत्यादि मन्त्रषट्क पठेत् पितृपितामहप्रपितामहमातृपितामहीप्र पितामहातृप्तिलिङ्ग । अत एव मन्त्रलिङ्गान्निपरणास्वधानमस्कार प्रभृतिषु[4] मात्रादाना नामोच्चारणमूहितमन्त्रक्रियमाहु ॥

आ० । ततो विषदमन्नमानीय विषद सश्लिष्ट विकिरेत् । उदकेनाप्लाव्य भूमा दर्भषुविकीर्य कच्चित्सपन्न भो इत्युक्त्वा तृप्यन्तु भवन्त इत्युक्त्वा यथालिङ्गमामन्त्रणप्रतिवचन श्रुत्वा ॥

तृप्तानाचामयित्वा य मे राम[6] इति प्रदक्षिण कृत्वा ॥ १९ ॥

दे० । आचमनमाचाम । त कृत्वाचामयित्वा प्रातान्य मे राम इत्यादिना प्रदक्षिण यथा भवति ॥

आ०। तृप्तान्ज्ञात्वा तत आचम्य य मे राम शकुनिरिति प्रदक्षिण कृत्वा। आवृत्तिमात्रमन्यस्यानुपदेशात् ॥

प्रत्येत्याभिरमन्तु भवन्त इत्युक्त्वा देवाश्च पितरश्चेत्यनुवाकशेष णोपतिष्ठते । २० ॥ ६३ ॥ ( ५।९) ।

दे० । ब्राह्मणानामुपस्थान कुर्याद्दक्षिणा दत्त्वा ॥

आ० । प्रत्येत्य यथाशक्ति दक्षिणा दत्त्वा । अभिरमन्ता भवन्त युइ

---

1 विषद here s equal to विशद । 2 लेशम् om D secon l ha ıd 3 ? प्राचीना ACT प्राचीनावाते D 4 Instead of निपरण D निर्वपण 5 Thus D oक्रियामाहु ACT and first hand of D nstead of च्चारणमूहित A oच्चारणसहित । 6 राम शकुनिरिति Devap la 7 प्रत्येत्यप्रतिग्यथाशक्ति the Ms

क्त्वा। अभिरता स्म इति प्रत्युक्तःदेवाश्च पितरश्चेत्यनुवाकशेषेणोप तिष्ठते ॥

---

द्वितीयस्य प्रथमोद्धृत हविष्यरुपसिच्य ॥ १ ॥

दे । द्यामुष्यायणस्य द्विधा श्राद्ध स्मृतिषूक्त । परिगृहातृगोत्रेण जनयितृगोत्रेण च कुयात् आवृत्त्या वा । तत्र यदा तन्त्रेण तदा प्रदाय निपरणे च म त्रोह । अमुष्म स्वधा नम इत्यत्र जनकप्रतिग्रहात्रोनाम चतुर्थीद्विवचना तमुच्चारयित य । देवदत्तयज्ञदत्ताभ्या स्वधा नम इत्यादि । निपरणे ऽप्यग्निरिव पृथिवामुपजावत देवदत्तयज्ञदत्ता ये च वामित्यादि । आवृत्तिपक्षे परिग्रहातु पूव कृत्वा पश्चाज्जनकस्य कुयात् । तत्र द्वितीयश्राद्धप्रकारोऽनेनोच्यत । द्वितायस्येत्यत्र सूत्रे प्रकार व याम इत्य याहत य । द्वितीयस्य जनकश्राद्धस्येतिकत यता वक्ष्याम । द्यामुष्यायणकतृकस्येत्यर्थः । अथ वा द्विपितुर्बीजिन श्राद्ध पृथग्वक्ष्याम इति याख्येय । यद्वा एकोऽपि कृत्रिमपुत्रादिभिद्यते कुलद्वयसब धभेदात्तत्र प्रतिग्रहातु श्राद्ध कृते जनकस्य श्राद्ध कुवाण स एव द्वितीय उच्यते । तस्य द्वितायत्वमापन्नस्य द्वितायश्राद्ध वक्ष्याम इत्यथ एकसघातेनव या रसवता कृता तत प्रतिग्रहातृश्राद्धकरणापूवमेवादधृ य सर्वान्न पृथक् स्थापयित य स यञ्जन । तच्चोपग्रहातृश्राद्धान तर हविष्यः दधिक्षारप्रभृतिभिरुपसिञ्चेत् ॥

आ० । द्वितायस्योक्त द्यामुष्यायणस्य द्वे श्राद्धे कुयादिति । तत्र द्वितीयस्य श्राद्धस्येतिकत यतोच्यते । अष्टकाहोमत त्रेण एकस्या पङ्क्ता[4] स यामिदमुच्यत । प्रथमादधृत पूवमेवादूधृत्य परिशिष्ट दन्नादुदधृत्य स यञ्जन हविष्यघृतादिभिरुपसिच्य अभिघृत कृत्वा गुप्त निधाय ॥

आवाहनादि सिद्ध सम्प्रदानम् ॥ २ ॥

---

1 Om ACT 2 R f to tl d ll a t a पृथिवी र्वि In the above g v n pa age I l a c e l l th text wl l n पृथिवामुपजात युक्त त्वन्त । 3 ? R a l कस्य
4 पक्त t l e M

दे० । तत अवाहनादि सप्रदानमनुवाकशेषेणोपस्थानान्तमन्येषु ब्राह्म णेषु कुयात् । सिद्धमित्यनेन[1] पूर्वोक्तप्रकार निदिशति । आवाहना द्युपस्थाना त पूर्वोक्तमन्यूनातिरिक्त पुन कुर्यात् । स्थालीपाका दिकमेव तु त त्रणोपकरोति । प्रथमोद्धृतहविष्यैः परिग्रहातु श्राद्ध कृ वा तत शषाज्ञनकस्या यैब्राह्मण श्राद्ध क्रियते । तत्रायमथः । प्रथम परिग्रहीतृश्राद्धाथमुद्धृत यस्मात्त प्रथमोद्धृत । तद्यातया मत्वदोषापसारणाय हविष्य क्षीरादिभिरुपासिच्य तत एवावाह नाद्युपस्थानान्त सकल सिद्ध पूर्वज्ञातमेवावृत्त्या कुयादन्यत् स्था लीपाकादि सकृत्कृत म त्रेणोपकरोति ॥

आ० । परिग्रहातु श्राद्ध कृत्वा ब्राह्मणान्विसृज्य ततोऽन्यानुपवेश्य जनयितुः प्रथमोद्धृतेनान्नेनावाहनादिसप्रदाना त सिद्ध यारयात यत्तत्कुर्यात् ॥

पूर्वेण निपरण व्यारयातम् । ३ ॥ ६४ ॥ (५।१०)

दे० । प्रवासदिवसकालभेदा पूर्वेण निपरण व्याख्यातमिति निपरण यथादर्शितमेव कर्त य । तत्र पूर्ववदूह[2] कर्त य इत्यर्थः ॥

ब्र० । पूर्वोक्तसूत्रानुगते द्वे श्राद्ध कुर्यादिति च प्रवराध्याय उक्त । तत्रव चकश्राद्धविधिरुक्त । एकश्राद्धे वा पृथगनुदिश्यकपिण्डे द्वा द्वावनु कीतय परिग्रहीतार चो पादयितार चातृतायपुरुषादिति[3] । एक श्राद्ध पिण्डमात्र एव । द्वा द्वावनुकीर्तन ब्राह्मणेष्वर्घ्यपात्राणि च षडेव । यत्रकपिण्डे द्वा द्वावनुकीर्तयेत्तत्र पिण्डपितृयज्ञश्राद्धा प्रकावेश्वदेवपिण्डम त्राणामूह । यथा । एतद्वा तता ये च वामनु । अग्निरिव पृथिवीमुपजावत । विष्णुमित्रसोमशर्माणा गातमवसिष्ठा वेष वा पिण्डो ये चात्र वामनु । एषा वा स्वधा । एवमुत्तरयोरेव मेव पिण्डसपर्यादा ॥

आ० । नान्तरेणा वष्टक्ष्येन एतदपि निपरण । अथवा श्राद्ध पृथगनु दिश्य । कथ वश्वदेविक तावत्त त्र । एकस्मिन्ब्राह्मणे द्वा पितरौ

---

1 ACT add पूव । 2 पक्षवदूह ACT 3 In the last chapter of the Prava dhy ya (Bombay Ms the text of the Pravaramanja being incorrect) we read ndeed as giver above द्वे श्राद्धे कुर्यादेकश्राद्धे वा etc

द्वितीयस्मिन्द्वा पितामहौ तृतीयस्मिन्द्वौ प्रपितामहौ च । यथा । अग्निरिव पृथिवीमुपजीवत । देवदत्तयज्ञदत्ता ये च वामन्वेषा वा स्वधेति प्रयोग । पिण्डपितृयज्ञे च एतद्वा ततो ये चात्र वामन्विति ॥

---

प्रातरन्वष्टक्यम् ॥ १ ॥

दे० । अष्टकाया अनु पश्चाद्भवमन्वष्टक्यमित्यान्वर्थिकेय सञ्ज्ञान्वष्टक्यमिति । एतच्च केचिदष्टकाया अङ्ग वदन्ति केचित्तत्सदृश विकारभूत कर्मान्तर । तत्रोभयथापि तत्कालत्व प्राप्ते कालान्तरमाह । प्रातरिति । नवम्या कर्तव्यमित्यर्थ ॥

आ० । नवम्यामन्वष्टक्यम् ॥

एतेनैव धर्मेण सप्रदाय निपरण कुर्यात्[1] ॥ २ ॥

द० । एतेनैव धर्मेण इति सवनाम्ना प्रकृतस्य द्वितीयस्य श्राद्धस्य परामर्शः । यथा द्वितीयश्राद्धे स्थालापाकादिक न क्रियते । सप्रदानाद्यावाहनाद्युपस्थानान्तमन्यूनातिरिक्तमनुष्ठीयते ॥

आ० । एतेनैव धर्मेण सप्रदाय सप्रदानमेवातिदिश्यते न होम । केचिद्योगविभागाद्धोममपीच्छन्ति । एतेनव तदानीं धर्मेण सप्रदाये व्यतिरिच्यते । एतदन्तर्भावात् । तस्मा सप्रदानमेवावाहनाद्यनुदेशनान्त । सप्रदाय निपरण कुर्यात् । कथ । निपरणप्रकार उच्यते ॥

षट्कर्षू कुर्याद्दक्षिणायता पूर्वापरा प्रादशमात्रीश्चतुरङ्गुलपृथ्वीस्तावदन्तरास्तावदवखाता ॥ ३ ॥

दे० । कर्षू खनिरुच्यते । षड्गर्भा[3] कुर्यात् । दक्षिणायत दक्षिणोत्तररेखया[4] आयता दीर्घा । किंप्रमाण दैर्घ्यमित्यपेक्षायामाह । प्रा

---

1 The last three words not found in Devapāla's text they are given by Br who however reads पिण्डकुर्यात् and by Ad as also by a Tuebingen and a Bombay Kāṭaka More over Devapāla connects the three first words with the preceding sūtra (प्रातरन्वष्टक्यमेतेनैव धर्मेण) That the last three words belong to the text appears from Ad and Br and a trace is found in Devapāla's expression सप्रदानादि । 2 सप्रदानावाहना D 3 Thus the Mss Read षड्गर्तान् ? 4 ०खाया ATC and first hand of D

देशमात्री प्रादेशप्रमाणाः। पूर्वापरा। पूर्वपश्चिमभावेन पङ्क्त्या स्थिता। चतुरङ्गुलपृथ्वा। पार्श्वतश्चतुरङ्गुलपरिमाणा पूर्वपश्चिम रेखायाम्। तावदन्तराः। चतुरङ्गुलपरिमाणमेव समन्तरं व्यवधानं कर्तव्यं पङ्क्तिरूपेण निर्मितानाम्। तावदवखाताः। चतुरङ्गुलपरिमाणा एव ता[1] अधः खननीयाः॥

ब्र०। दक्षिणतः कर्षूः प्रत्यगपवर्गाः खनेत्तिस्रः पितॄणां तिस्रो मातॄणाम्॥

आ०। षट्कर्षूः कुर्यादित्यादि। केचित्प्रकृतं निपरणं कृत्वा षट्कर्षूः कुर्वन्ति। तदानीमेतेनैव धर्मेण निपरणान्तं कृत्वेत्यवक्ष्यत्। तस्मादित्थं निपरणं कुर्यात्। षट्कर्षूः कुर्यात्। किंभूताः। दक्षिणायताः। दक्षिणतो दीर्घाः। पूर्वापराः। पूर्वादारभ्यापरसंस्थानाः। प्रादेशमात्रीः। चतुरङ्गुलास्ताराः[2]। तावदन्तराः। चतुरङ्गुलव्यवहिताः। तावच्चाधस्तात्खाताः॥

तासां दक्षिणतः खराः॥ ४॥

दे०। कर्तव्या इति शेषः। खराः वत्तिकास्थलानि। ते तासां कर्षूणां दक्षिणेषु भागेषु षट्कर्तव्याः॥

ब्र०। तासां दक्षिणतस्तथैव मृदा षट् खराः॥

तेष्वग्नीन्विहृत्यावोक्ष्य कर्षूर्दक्षिणाग्रान्दर्भानास्तीर्य॥ ५॥

दे०। तेषु खरेषु जानुदघ्नेष्वापसदादुद्धृत्य विहृत्य परिस्तीर्य पर्युक्ष्य परिसमूह्य चाग्नीन् कर्षूश्चावोक्ष्यावसिच्य कर्षूषु दक्षिणाग्रान्दर्भानास्तार्य॥

ब्र०। तेषूद्धृतावोक्षितेषु यज्ञोपवीत्यासादनाङ्गे परिसमूहनपर्युक्षणे कुर्यात्। षष्ठ आसादिते प्राचीनावीती कर्षूरवोक्ष्य खराग्नीनां होमाङ्गे पुनश्च अप्रदक्षिणेन परिसमूहनपर्युक्षणे कुर्यात्। कर्षूषु दक्षिणाग्रान्दर्भान्समूलानास्तीर्य खरांश्च दक्षिणपश्चिमाग्रं स्तृणाति॥

पिण्डपितृयज्ञावृता पूर्वासु तिसृषु निधाय[5] मज्जानमुपनिनीय दुग्धेनाभितः परिषिच्य ये चात्र रसाः स्युरेतद्भवद्भ्य इत्युक्त्वा

1 तासु C तास्व AT 2 लस्तारा the Ms 3 Here Ad breaks off 4 Emended कर्षूस्वोक्ष्य the Bombay Ms 5 विधाय the Mss of Devapāla

तृप्यन्तु भवन्त इत्युक्त्वा ॥ ६ ॥

दे० । उक्तस्य पिण्डपितृयज्ञस्यावृदितिकर्तव्यता । पृथिवी दर्विरित्यादिमन्त्रादिका पूर्वासु पूर्वदिग्वर्तिनीषु तिसृषु कर्षूषु त्रीन् पिण्डान् पितृपितामहप्रपितामहेभ्यो देवदत्तादिभ्यो मज्जानं च पिण्डसमीपे यूषलक्षण[1] स्थापयित्वा । सर्वतश्च सर्वपिण्डान् दुग्धेन परिषिच्य । अन्ये ऽपि ये रसवत्या सिद्धा रसाः सन्ति तैरपि पिण्डान् सर्वतः परिषिच्य । एतदन्नं भवद्भ्यः पितृपितामहप्रपितामहेभ्यो देवदत्तादिभ्य इत्युक्त्वा तृप्यन्तु भवन्तः पितर इत्युक्त्वा ॥

ब्र० । ततः प्रणयनक्रमेणैव षट्सु अपि खराग्निषु पिण्डपितृयज्ञवत् प्रत्येकमाहुतिद्वयं हुत्वा । ततस्तान् मज्जानमुपनिनीय दुग्धेनाभितः परिषिञ्चति ये चात्र दधिमधुघृतादयो रसाः संनिहिताः स्युः । ततः पितॄन् ध्यायन्नेतद्भवद्भ्यः तृप्यन्तु भवन्त इति कर्षूरीक्षमाणो वदेत् ॥

एवमपरासु स्त्रीभ्यो दद्यान्मज्जवर्जं सुरां तूपनिनाय मन्थेनाभितः परिषिच्य ये चात्र रसाः स्युस्तद्भवतीभ्य इत्युक्त्वा तृप्यन्तु भवत्य इत्युक्त्वा ॥ ७ ॥

दे० । एवमपरास्वपरदिग्भागवर्तिनीषु तिसृष्ववशिष्टासु कर्षूषु स्त्रीभ्यो मात्रादिभ्यस्त्रीन् पिण्डान् पृथिवी दर्विरित्यादिप्रकारेण दद्यात् । एतावांस्तु विशेषः । मज्जानं तत्र नोपनिनयेत् । मज्जास्थाने सुरां विकृतयवरसरूपामुपनिनयेत् । मन्थेन चोदकाविलीकृतसक्तुरूपेण सर्वतः परिषिञ्चेत् । अन्ये ऽपि ये रसास्तैरपि सिञ्चेत् । एतद्भवतीभ्यो मात्रादिभ्य इत्युक्त्वा तृप्यन्तु भवत्यो मातर इत्यादि चोक्त्वा ॥

ब्र० । ततः किंचिन्मात्रशेषं चरुशेषमुद्धृत्यैवमपरासु कर्षूषु मातृभ्यः पिण्डनिधानं । ततस्तान् मज्जवर्जं सुरामुपनिनीय गोदुग्धे सक्तूनोप्यैषीकया प्रसव्यमनारभ्योपमथ्य तेन परिषिञ्चति ये चात्र मधुघृतादयो रसास्तैश्च ॥

प्रेष्याः पिण्डान्भक्षयेयुर्निषादा वाग्नौ वाप्सु वा ब्राह्मणान्वा माजयेत् । ८ ॥ ६५ ॥ ( ५।११ )

---

1 पेशीलक्षणD

दे० । पिण्डाना प्रतिपत्तिं कुर्यात्कथ । प्रेष्या भृत्या अनुज्ञाता सन्त पिण्डा भक्षयेयु । धीवरा वा सुराश दाथदूषितत्वात् अप्स्वग्ना वा क्षेप्त या । ब्राह्मण वा भोजयेत्पिण्डान् ये सुराथश दसस्पर्शेन न दूषिताः प्रथमास्त्रय ॥

ब्र० । सुरालिप्तान्पिण्डा प्रेष्या निषादा वाश्नीरन् अप्सु वा क्षिपेत् । इत रानग्नौ वा प्रास्येद्ब्राह्मण वा भोजयेत् ॥

---

अथ प्रथमश्राद्धस्याष्टकया धर्मो व्याख्यात ॥ १ ॥

दे० । अथशब्द आनन्तर्यार्थः । यदुक्त । शुचिर्भूत्वा पितृभ्यो दद्यादिति[1]। तत्राग्न्युत्पत्त्यनन्तरमेव प्रथमश्राद्ध क्रमप्राप्तमपि नोक्त विकृतेः प्रकृतित त्रापेक्षितया प्रकृतित त्रपरिज्ञान विना दुरधिगमत्वात् । अष्टकाविकाराणि हि सर्वश्राद्धानि । प्रकृतौ ज्ञाताया ज्ञायन्त इत्यष्टकानन्तर शुचिभूतस्यैकादशे ऽहनि प्रथमश्राद्धमधुनारोप्यते । किं च प्रथमश्राद्धस्यामङ्गलप्रायत्वेन लोके प्रसिद्धत्वात्प्रचुरपुरुषार्थाभिहिताग्न्याधानान्तरमभिधान[3] न कृतमित्यप्याहु । अत एवाथ शब्दो मङ्गलमाति त त्रेण द्योतयतीति वर्णयन्ति । अतश्चायमर्थ । अथ प्रकृत्यधिगत्यनन्तर प्राप्तप्रस्तावस्य प्रथमश्राद्धाभिधानस्य सामान्येनाष्टकया धर्मो याख्यात इतिकर्त यता विध्यन्त इत्येव भावः प्रकार इति पर्यायः ॥

ब्र० । प्रेतैकोद्दिष्टेष्वृतूना पत्न्यृतस्य धाम देवा ग्रावाण इत्यष्टकास्थाली पाकहोम ॥

एकवन्मन्त्रानूहेत् ॥ २ ॥

दे० । एकोद्दिष्टत्वादतिदेशप्राप्तस्य म त्रगतस्य पितृनाम्नो बहुवचनान्तस्यैकवचनमूहेत् । एकेनार्थेन तुल्यमेकवत् ॥

पेश्य प्रातरित्यनियम ॥ ३ ॥

दे० । अष्टकायाः पशुपक्षे च पेश्यो ऽवदानस्थाने चादिता[5] ता अतिदेशेन प्रथमश्राद्धे विकल्प्यमानपश्वनुकम्पित्वेन प्राप्ता सत्यो

---

1 Cp XLVI 1  2 Thus D and C श्राद्धस्य मङ्गलप्रयत्न AT  3 ? पुरुषार्थार्थाभि (हि) ता ATC  पुरुषार्थाभिधान्या D
4. Cp LXI 1-5  5 Cp LXII 3

नियमभावविशिष्टभावा[1] उच्यन्ते पेशाषु स्वेच्छा कर्तव्या न वेति। पेशीद्वारेण च पशो स्वेच्छोक्तिरिय विकल्पपक्षे हि पाक्षिको नियम स्यात्। एव प्रकृतावन्वष्टक्य प्रातरुक्त। तस्याप्यतिदेशन नियम प्राप्तस्यानियम उच्यत ॥

ब्र । यद्यपि शुरुक्तस्तस्य विधे नियमस्त्वङ्गारश्रृताना पशाना स्थाल्या मेवावदानानि प्रकृतिवदाश्रपयेच्छो ऽन्वष्टक्यस्य चानियम ॥

तिस्र कर्षू कुर्यात्त्रिष्वग्निषु कृत्वैकैक पिण्डमुत्सृज्य प्रथमामन्नस्य पूरयेद्दधिमध्विति द्वितीयां घृतमासमिति तृतीयाम् ॥ ४ ॥

दे० । त्रिष्वग्निषु यथाप्राप्तहोमान्कृत्वा पित्रुद्दशेनैकस्या कर्ष्वामेकक पिण्ड क्षिपेत्पृथिवा दर्विरिति मन्त्रेणावृत्तिभाजा। तत्र प्रथमामन्नस्य नाना प्रकारस्य हविष्यस्य भागेन पूरयेत्। द्वितीया तु दधिमध्विति पूरयेत्। निपातानामनेकार्थत्वात्। इतिशब्दः करणशक्तिप्रधानोऽधि करणशक्तिप्रधानान्त शब्दवत् दधिमधुभ्या द्वितीया पूरयेदित्यर्थ । घृतमासमिति तृतीया पूरयेदिति समान पूर्वेण। वपाक्षीरादिपरि षेकोऽपि प्रकृतिवत् ॥

एव मासि मासि ॥ ५ ॥

दे० । प्रतिमासमेषव कर्तव्यता। नवश्राद्धानामित्यतिदेशार्थ ॥

एव सावत्सरिकम् ॥ ६ ॥

दे० । सवत्सरे भव सावत्सरिक। सपिण्डीकरणमप्यवमित्यतिदेशार्थः॥

चतुर्थ पिण्डमुत्सृज्य त्रेध कृत्वा पिण्डषु निदध्यात्ससृजतु त्वा पृथिवी वायुरग्नि प्रजापति ससृज्यध्व पूर्वेभि पितृभि सह । समाना व स वो मनांसीति ॥ ७ ॥

दे० । सपिण्डीकरणे विशेषमाह । चतुर्थ निदध्यात्। अर्थात्पितृ पितामहप्रपितामहाना दद्यात्। भागनिधाने मन्त्रानाह। ससृजत्वि त्यनेन सहान्तेन समाना व इत्यादिना च त्रयेण प्रक्षिपेदेकैकत्रे- त्यर्थ । तत्र शाखान्तरीया प्रथमा पठिता ॥

1 नियमभावेन विशि AT 2 ? Could be read also क्षुदुक्तस्तस्य

एवमुदकानि ॥ ८ ॥ ६६ ॥ ( ५।१२ )

दे० । पाद्यान्यर्घ्याणि च चतुर्थे पात्र पिण्डवत्पितृपात्रेषु अनेनव मन्त्र त्रयेण निदध्यादित्यतिदेशाथ । पश्चादावाहनाद्युपस्थानान्त कृत्वान्वष्टक्यादिवत् ॥

दे० । उक्त सवश्राद्धानामष्टकाविकारत्व[1] । तत्र यानि पञ्चम्यादा पुत्र कामादिश्राद्धानि लाके प्रसिद्धानि यानि च नान्दीमुखप्रभृतानि विवाहोपनयनतीथयात्राविशेषप्राप्तिविद्धद्धराद्धिजोत्तमगृहगमनादिनि मित्तानि विश्वजिदधिकरणनयकल्पितस्वर्गफलानि तानि प्रथमाष्ट काप्रकाराणि । यानि तु भणितनिमित्तान्येवानन्तरकथितस्वरूपाणि मेदोघृतकुल्यादिपितृतपणाद्यथवादबलेन मासविशेषसाध्यानि तानि द्वितीयमासाष्टकाविकारित्वेन गम्यन्ते यानि तु पिण्डान्वाहायशब्द वाच्यान्यमावस्याद्वादशीसक्रान्त्यादिनिमित्तकान्युक्तनयेन स्वर्गफल कानि नित्यानि च होमाग्निष्टोमनिदर्शनेन तानि च मासाष्टकावि कारित्वेन प्रतीयन्ते । तदेतद्भेदत्रय क्रमेण भणति ॥

अथेतरस्य श्राद्धस्याष्टकया धर्मो व्याख्यात ॥ १ ॥

दे० । अथत्यानन्तर्याथ प्रकृतिज्ञानपूवकस्य[3] विकृतिज्ञाने निदर्शितत्वात् । इतरस्य नान्दीमुखादेरमाससाध्यत्वपक्षो धर्म इतिकतव्यतादिपया योऽष्टकया प्रथमया व्याख्यात । प्रथमाष्टकाप्रकारत्वमेव व्यङ्क्तमाह।

ब्र० । अथेतरस्येति पशुश्राद्धामावस्याश्राद्ध वजयित्वा प्रेतश्राद्धसपिण्डी करणनान्दीमुखाब्दिकस्य कतव्यस्य ॥ अथतरस्य श्राद्धस्यत्युक्तव्य तिरिक्तसात्वसरिकादभ्युदयिकादिश्राद्धादाना प्रथमपञ्चकविधि [4] ॥

1 ष्टकान्वितत्व D 2 We expect rather अपूपाष्टका 3 प्रतिकृति ACT 4 In Br (the Bombay Ms the Lahore Ms s of no help) all is confused Here comes first chapter LXVII w th out any commentary and numbered 1f (read 66) Then follows the text of chapter LXVIII numbered 67 Then a part of the bhaṣya given by me under LXVII 1 (first part) Then comes the text of chapter LXIX without any number Then mmediately the bhaṣya given by me under LXVII 2 then the one under LXIX 1 then the one given under LXVIII 1 and lastly the one given byme under LXVII 1 (second half)

प्रथमेन पञ्चकेन[1] ॥ २ ॥

द ।आज्यमिति स्थितमेव ॥

ब्र ।अत्राभिहोमविहितपञ्चकनिर्देशात्त सब धस्थालीपाकहोम उपल क्ष्यत ॥

आवाहनादि सिद्ध सप्रदानम् ॥ ३ ॥

दे० । सप्रदानमपि सिद्धमविचारितमेव । सर्वप्रकृतिविकृतिसाधारण त्वात् ॥

पूर्वेण निपरण व्यारयातम् ॥ ४ ॥ ६७ ॥ ( ५ । १३ )

दे० । पूर्वेणाष्टकाप्रकारेण कषूकरणादिनेति विशेषेण याख्यात कथित

अथेतरस्य पशुश्राद्धस्याष्टकया धर्मो व्यारयात ॥ १ ॥

ब्र० । श्रोत्रिये गृहमागते मधुपकवत्तूष्णी पशु सज्ञप्य यच्छ्राद्ध त पशु श्राद्धम् ॥

मध्यमेन पञ्चकन ॥ २ ॥

दे० । प्रधानहोम इति शेष ॥

आवाहनादि सिद्ध सप्रदानम् ॥ ३ ॥

दे० । गतार्थम् ॥

पूर्वेण निपरण व्यारयातम्[2] ॥ ४ ॥ ६८ ॥ ( ५।१४ )

---

अथेतरस्य मासिमासिश्राद्धस्याष्टकया धमा व्यारयात ॥ १ ॥

दे० । इतरस्य प्रथममास यतिरिक्तस्यामावस्यादेस्तृतीयाष्टकया धर्मो व्याख्यात । अस्य पिण्डान्वाहार्यमिति सज्ञा सिद्धा । पिण्ड दानानन्तर ब्राह्मणभोजनाहरणा प्रधानादन्वार्थिकीय[6] सज्ञा ॥

ब्र० । मासिमासिश्राद्धस्यामावस्यानुपलक्ष्यते ॥

उत्तमेन पञ्चकेन ॥ २ ॥

---

1 Cp LXI 6  2 DC g ve now as bh ya tl e pas age which TA subjoin on LXIX 1  3 Th passag in TA only  4 Cp note on LXVIII 4  5 प्रसिद्धा DC
6 वार्थिकी DC

दे० । तृतीयेन पञ्चकेनाज्यभागान्ते स्थालीपाकस्य होमः तृतीयाष्टकावत् । आवाहनादि सिद्धं सम्प्रदानम्[1] ॥ ३ ॥

पूर्वेण निपरणं व्याख्यातम् ॥ ४ ॥ ६९ ॥ ( ५ । १५ )

दे० । गतार्थं ॥ अन्ये तु पूर्वेण निपरणमिति सर्वत्रेदमर्थं व्याचक्षते । पूर्वेण पृथिवी दर्विरिति न तूत्तराभ्यामिति नियमार्थमेतत् । इदं त्वखिलार्यजनानुष्ठानविपरीतं । किं चकोद्दिष्टत्वं चापतेदेव । उक्तं हि । वसवः पितरो भूम्यधिपतयो रुद्राः पितामहा अन्तरिक्षपतय आदित्याः प्रपितामहास्तृतीयलोकाधिपतय । तत्र पितृप्रकाशसमर्थत्वात्प्रथममन्त्रस्य मन्त्रलिङ्गबलेनैकोद्दिष्टत्वं प्राप्नोति । मुनिवचनबलेन त्वन्यत्र विनियोगो नास्ति क्षीणत्वादर्थापत्तेरन्यार्थत्वेन वचनस्योपपन्नत्वात् ॥

---

दे० । एवं शुचिभूतः पितृभ्यो दद्यादिति प्रसक्तानुप्रसक्तं निर्वर्त्य फाल्गुनीपाकयज्ञमवशिष्टमाह ॥

अथ फाल्गुन्यां तैलापूपस्य जुहोति ॥ १ ॥

दे० । फाल्गुनामासि पौर्णमासी । तस्यां तैलपक्केन गोधूमादिमयेनापूपेन होमः कर्तव्यः । अथशब्दः श्राद्धानन्तरतां भणन् श्राद्धप्रकरणनिवृत्तिस्वस्त्ययनभविष्यत्त्वद्योतनद्वारेण मङ्गलमभिद्योतयति । अधुना जुहोतिशब्दश्रवणात्पाकयज्ञतन्त्राभावशङ्कानिवारणाय यज्ञप्रतीतये देवतामन्त्रं चापूपहोमं च दर्शयति यज्ञहोमान्तत्वोपदर्शनाय ।

अर्यमा देवता ये ते अर्यमन्निति ॥ २ ॥

दे० । अपूपमन्त्रे अर्यमा देवतासंबन्धश्च यवस्य शरीरं । ये ते अर्यमन्निति मन्त्रः ॥

अथेन्द्राण्याः ॥ ३ ॥

दे० । जुहोतीत्यनुषज्यते । द्रव्यमन्त्रा त्वत्र वक्ष्येते प्रकरणसमाप्तौ[3] ॥

प्रससाहिष इति तुण्डिलस्य जुहोति ॥ ४ ॥

दे० । तुण्डो[4] विद्यते यस्य स तुण्डिलो मध्योन्नतः पुरोडाशाकृतिस्त

---

1 This sūtra has fallen out in the Mss of Devapāla.
2 Cp XLVI 1 3 Cp sūtra 6 4. Thus T तुण्डा ACD

ण्डुलपिष्टादिपकः किलाटलोपिकादिवा[1] तेन[1] प्रससाहिष इति मन्त्रेण जुहोति ॥

गोलका रुद्रदेवत्या [2] ॥ ५ ॥

दे० । गोलका यवमयव्रीहिमय गोला इति प्राकृतभाषया प्रसिद्धा । ते रुद्रदेवत्या कर्तव्या । मन्त्रो हि रुद्रलिङ्गको ऽर्थात् ॥

अदितिर्द्यौरदितिरिन्द्राणी[4] पत्येत्योदनया शाकपललाक्तयो ॥ ६ । ७० ॥ ( ५।१६ )

दे० । पादद्वयोद्धृतावोदनौ । तयोरेक शाकेनाभ्य य मिश्राकृत्यादितिर्द्यौरदितिरन्तरिक्षमित्याहुतिं जुहुयात् । द्वितीय तु पललेन[6] तिलतण्डुलचूर्णनिर्मितेनाभ्यज्येन्द्राण्या पूर्वोक्ताया इन्द्राणी पत्येत्यादिमन्त्रेण जुहुयात् । तदेव पञ्च हवींषि ॥

ब्र० । अर्यमा इन्द्राणी इन्द्र रुद्र अदितिरिति पञ्च फाल्गुन्यदेवता । पात्रप्रयोगकाल तलशाकपललाक्त तिलानुपसादयेत् । अर्यम्ण जुष्ट निर्वपामीति तैलापूपस्य व्रीहिणा निर्वपेत् । इन्द्राण्यै जुष्टमिति स्थालीपाकस्य । इन्द्राय जुष्टमिति तुण्डिलस्य । रुद्राय जुष्टमिति गोलकत्रयस्य । अदित्यै जुष्टमिति स्थालीपाकस्य । एवमेव प्रोक्षणं । तिलाना पिष्टानामग्ना तप्ताना निष्पीडिताना पृथक् तैल कृत्वा तलेन हविरासादनकाले ऽपूपमक्त्वासादयेत् । पललेनेन्द्राण्याश्चरु कल्केनादित्या आज्यभागान्ते हुते ये ते अर्यमन्निति तैलापूपस्यावदाय प्रधानाहुति । इन्द्राणी पत्यति पललाक्तस्य चरो । प्रससाहिष इति तुण्डिलस्य । मृडा नो रुद्रेति समवदाय गोलकाना ।

---

1 पिकादिना वा तन AT 2 दैवत्या the Ms of Devapala देवता B (cont nuous text) and a Bombay ?caka 3 The Mantra for the oblat on to Rudra is not ment o 1? according to Dev and Br t s K th XL 11 145 15-16 4 The first mantra not n the printed text of the Kathaka belongs probably to the Katha ra yaka t s identical with Taitt r I 13 2 (6) 5 पलाला the Mss of Devapāla 6 पक्षालेन D only 7 Cp s tra 2 8 कल्पेनादित्याज्य the Bombay Ms कल्पनादित्य आज्य० the Lahore Ms

अदितिर्द्यौरिति क काकस्य[1] चरो । ततः त त्रसमाप्ति ॥

गावो भग इति द्वाभ्या गोयज्ञस्य ॥ १ ॥

दे० । गवा प्रसूताना स्वास्थ्य पुनः सगर्भग्रहणाद्यर्थो[2] वस ते यज्ञो गोयज्ञ । अश्रुतद्र येषु चाज्य हवि चतुर्गृहात यवव्रीहिनिर्मित वा यवकादिद्दष्टार्थेषु लोके स्वस्त्ययनेषु प्रवृत्त्यर्थत्वा प्रायेण च स्रुवेण होम उपनयनादौ दृष्टार्थानि श्रावणयष्टकादिप्रभृती यदृष्टार्थान्यपि । अत्रैवावसरे प्रथमफलकमार्थ स्वस्त्ययनमाह ॥

ब्र० । गोयज्ञ गोमङ्गल्यामिति कश्मीरेषु प्रसिद्ध । गोयज्ञे च हलानि योजयन्ति प्रथमे वसन्त हिमापगमे । यज्ञश द्रो ऽत्र त त्र ॥ गोमङ्गलयज्ञादीना रात्रियज्ञादाना सर्वेषामाज्यधा या[3] एवावदायाज्य प्रधानाहुतार्यथोक्त जुहुयात् । अत्र सवत्राज्य हवि । आज्यभागान्ते चतुर्गृहीतेन प्रचार । गावा भगा न ता अर्वेति गोमङ्गले प्रधानम् ॥

सीरा युञ्ज तीति तिसृभिरायोजनीयस्य ॥ २ ॥

दे० । जुहुया सारा युञ्ज तीत्यादिभिस्तिसृभिर्ऋग्भि ॥

प्रथमोत्तमाभ्या युनक्ति ॥ ३ ॥

दे० । सीरा युञ्ज तीति या प्रथमा गायत्रा पूषा युनक्ति वति च योत्तमा द्विपदी त्रिष्टुप् ताभ्या यागान तर बलीवदा युनक्ति यूपे सयोजयन्तीत्यर्थ । युनक्तियोक्त्रवतीतिश द्वौ बलीवर्दाना यूपसयोजने रूढौ ॥

मध्यमया फालम् ॥ ४ ॥

दे० । युनक्त सीरेति मध्यमया फाल युनक्ति ॥

शुन सुफाला इति प्रदक्षिण द्वे कृषति[6] ॥ ५ ॥

दे० । शुन सुफालेत्यादिकयर्चा प्रदक्षिण कृत्वा द्वे सीते कृषन्ति ॥

---

1 Thus the Bombay Ms कल्पाक्त the Lahore Ms 2 सद्गर्भ ACT 3 oधा यामेवा the Ms 4 यागा तर or युगान्तर the Mss 5 The Mss of Dev consequently फलम् । 6 The Mss of Devapāla have the plural

लाङ्गल पवीरवमित्यपरे द्वे ॥ ६ ॥

दे० । लाङ्गल पवीरवमित्यादिकयचान्ये द्वे साते कृषन्ति ॥

ब्र । सीरा युञ्जन्ति युनक्त सीरा पूषा युनक्त्विति तिसृभि । तदेव द्विपदा[1] सतृताया[1] । प्रधानाहुतिषु हुतासु सीरा युञ्जन्ति पूषा युनक्त्वित्यनड्वाहो युनक्ति । युनक्त सारेति फाल । कर्षण यथो कवत् । कमणि समाप्ते घृतेन सातेति[2] चतुगृहातेनाज्यस्य प्रधान । ततस्तन्त्रसमाप्ति । एतद्गीमङ्गलम् ॥

घृतेन सीतेति सीतायज्ञस्य ॥ ७ ॥

दे० । घृतेन सीतेति मन्त्रेण सातायज्ञस्य जुहुयात् । कार्त्तिकशुक्लद्वादश्या यवबीजवपनोपक्रमाय[3] सातायज्ञस्यार्येषु प्रसिद्धो यत्र वीरणादि मयो सीता कुमारा दवता विरच्यते ॥

या ओषधय इति बीजवपनीयस्य ॥ ८ ॥

दे० । बीजवपन यस्य स बीजवपनीयो यज्ञ । तस्य या ओषधय इति जुहुयात् । सीतायज्ञानन्तरमेवष यज्ञस्ततो यवबीजवपनम् ॥

ब्र० । या ओषधय इति यदा बाजानि उप्यन्ते ॥

विमुच्यध्वमिति विमोचनीयस्य ॥ ९ ॥

दे० । अत्रापि प्रयोजनार्थीयस्तद्धित । विमुच्यध्वमित्यादिना विमोचनाययज्ञस्य जुहुयात् । सर्वबाजवपनसमाप्तावय यज्ञ स्वस्तये ॥

ब्र० । विमुच्यध्वमिति यदा बलीवर्दा हल समाप्ते विमुच्यन्ते ॥

त्रातारमिन्द्रमिति द्वे पर्ययणस्य ॥ १० ॥

दे० । पर्ययण खलप्राप्ताना व्राहीणा क्षोदन बलावर्दचरणैर्गाहन यत्र गाहिकेति प्रसिद्धिरार्याणा तत्प्रयोजनस्य यज्ञस्य त्रातारमिन्द्रमि

---

1 Thus the Ms ) Br then comb n th fir t words of s tra 7 w th the pr ced ng So al o h nter punction in the cont nuou text अपरे द्वे । घृतेन सीतेति । सीरा यज्ञस्य (sic !) या आष etc 3 वपनक्रमाय D वपनोक्रमाय AT वपनोपनोक्रमाय C 4 सिद्धे D 5 वापनी Br 6 Thus the Lahore Ms and a Tueb ngen Ms फले the Bombay Ms 7 गैहन CD

